न विवादे न कलहे न सेनायां न सङ्गरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥

'ईरिणं' ऊषरं। 'प्रौढ़पादः' अवसक्थिका-जान्वोर्मध्यस्य च वस्त्रादिना वेष्टनं। 'भुक्तमात्रे' यावदार्द्रपाणिरित्यर्थः।

उदके तु न धर्मार्थं जपनिषेधः किं तर्हि अपूर्वग्रहणार्थं, एते त्वादरार्थाः, नान्येष्वनध्यायेषु मानसाभ्यनुज्ञेति केचित्। अपरे तु मानसमपीच्छन्ति।

तथाच बौधायनः।

अन्येषु चाद्भुतोत्पातेष्वनध्यायोऽन्यत्र मानसात्।

'मानसः' विजन-मरणयोरनध्यायः।

मनुः।

उदके मध्यरात्रौ च विण्मूत्रे परिवर्जयेत्।
उच्छिष्टः श्राद्धभुक्तौ च मनसापि न चिन्तयेत् ॥

गौतमः।

ऊर्द्धं भोजनादुत्सवे प्राधीतस्य च उत्सवे उपनयनादूर्ध्वं भोजनादहोरात्रमनध्यायः।

'प्राधीतस्य' अध्ययने प्रथमं प्रवृत्तस्य, भोजनादूर्द्धमनुत्सवेऽपि पूर्ववदनध्यायः।

स्मृत्यन्तरे।

शोभनगृहे शोभनदिवसे वानध्यायः विवाह-मौञ्जीबन्धन-प्रतिष्ठोद्यापनादिषु मार्जनसंमार्ष्टिः सपिण्ड-सगोत्राणामनध्यायः। यज्ञे चानुबन्धात् ऋत्विजामाचार्याणाञ्च।

मनुः ।

पांशुवर्षे दिशां दाहे गोमायुविरुते तथा ।

श्वखरोष्ट्रे च रुवति पङ्क्तौ च न पठेत् द्विजः ॥

यमः ।

शिवारुतं तथा श्रुत्वा सन्ध्ययोर्न द्विजोत्तमः ।

नापराह्णे न मध्याह्ने नार्द्धरात्रे कदाचन ॥

शिष्टे च गृहमागते तदनुज्ञावधिरनध्यायः ।

तथाच यमः ।

आगतस्वातिथिं दृष्ट्वा नाधीयीतैव बुद्धिमान् ।

अभ्यनुज्ञापिते तस्मिन्नध्येयं तु प्रयत्नतः ॥

मनुः .

अतिथिश्चाननुज्ञाप्य मारुते वाति वायति ।

रुधिरे च श्रुते गात्रात् शस्त्रेण च परिक्षते ॥

ब्राह्मणागमनेऽध्येयादीनि दत्वाभ्यनुज्ञाप्याधीयीरन् ।

आपस्तम्बः ।

ब्रह्म चोपमाणो मत्तवदाचरेच्छन् सम्भाषितुं संसतोऽध्येतुर्ब्राह्मणान् सम्भाष्यतया सम्भावेत सम्भाषित्वा ब्राह्मणे नैव सम्भाव्याधीयीत, तथा श्रोत्रियाद्यागमेऽधिजिगांसमानोऽधीयानोवानुज्ञाप्याधीयीताध्यापयेद्वा गुरुसन्निधौ वाधीहि भो इत्युक्तोऽधीयीताध्यापयेद्वोभयतः उपसंग्रहणमधिजिगांसमानस्याधीत्य चाधीयानेषु वा यत्रान्योऽभ्यपेयादेतमेव शब्दमुत्सृज्याधीयीत ।

तथामृतावश्वदर्शनेऽप्यनध्यायमाह ।

गौतमः ।

अभ्रदर्शने चापर्त्ताविति ।

'अभ्रं' जलधरो मेघः ।

यमः ।

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदार-कपित्थयोः ॥

यत्तु मनुनोक्तं ।

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं द्विजः ॥ इति ।

तद्ब्रह्मयज्ञाध्ययनविषयं ।

तथाच ब्रह्मयज्ञं प्रकृत्य तैत्तरीयकाः समामनन्ति ।

तस्य वा एतस्य ब्रह्मयज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देश-इति ।

अतएव मनुरपि ।

वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

'वेदोपकरणानि' अङ्गानि, 'नित्यस्वाध्यायः' ब्रह्मयज्ञमन्त्रौ, होममन्त्रग्रहणं वषियज्ञादिमन्त्राणामप्युपलक्षणं ।

नैत्यिके नास्त्यनध्यायो ब्रह्मयज्ञन्तु तत् स्मृतं ।
ब्रह्माहुतिहुतिं पुण्यमनध्यायवषट्कृतं ।
अपूर्वग्रहणार्थे वानध्यायो न तु कर्मणि ॥

प्रयोगशौनकोऽपि ।

नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च।
नानध्यायोभवेद्देवं ग्रहणे चाह यो स्मृतः(१) ॥ इति।

पुराणात्।

शिष्योऽध्ययनञ्च कुर्व्वन्ननध्यायान् विवर्जयेत्।
अध्यापनञ्चापि कुर्व्वन् अनध्यायान् विवर्जयेत् ॥

मनुः।

इमान्नित्यमनध्यायानधीयानो विवर्जयेत्।
अध्यापनञ्च कुर्व्वाणः शिष्याणां विधिपूर्व्वकं ॥

तथा।

प्रणवव्याहृतीनाञ्च सावित्र्याः शिरसः सदा।
नित्ये नैमित्तिके कार्य्ये व्रते यज्ञे क्रतौ तथा ॥
प्रक्रान्ते कामकार्य्ये च नानध्यायाः स्मृतास्तथा।
देवतार्च्चनमन्त्राणां नानध्यायः स्मृतस्तथा ॥

तथा।

चतुर्दश्यष्टमी-पर्व्व-प्रतिपत्स्वेव सर्व्वदा।
दुर्म्मेधसामनध्यायस्त्वन्तरा गमनेषु च।
तत्र विस्मृतिशीलानां बहुवेदप्रपाठिनां ॥
चतुर्दश्यष्टमी-पर्व्व-प्रतिपद्वर्जितेषु च।
वेदाङ्ग-न्याय-मीमांसा-धर्म्मशास्त्राणि चाभ्यसेत् ॥

गौतमः।

प्रतिविद्यं यावत्समामनन्ति तथा चतुष्पथे भोजनोत्सरकालं

(१) "ग्रहणे चाह यो स्मृतः" इत्ययं पाठः न समीचीनो विभाति।

छन्दोगानामनध्यायः, तथाच प्राग्भोजनीयात् प्रादाद्धीयारण्य-गेयानि ।

आपस्तम्बः ।

यथोक्तमन्यदतःपरिषत्स्वपि ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वरसकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये अनध्यायकालनिर्णयः ।

---

## अथ केशान्तकर्मकालः ।

तत्र याज्ञवल्क्यः ।

केशान्तश्चैव षोडशे ।

'केशान्तः' गोदानाख्यं कर्म, एतच्च ब्राह्मणविषयं ।

यदाह मनुः ।

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।

राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥

ज्योतिःशास्त्रे ।

यान्युक्तानि चौरेषु भानि तान्येव चूडाकरणे ।

उपनयने गोदाने केशान्ते च शस्तानि ॥

इति केशान्तकर्मकालः ।

---

## अथ ब्रह्मचर्य्यकालविधिः ।

तत्रापस्तम्बः ।

उपेतस्याचार्य्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वर्षाणि पादोनमर्द्धेन त्रिभिर्वा द्वादशावरार्द्धं न ब्रह्मचारिणोऽवरोपवासोऽस्ति । त्रिभिः पादैरूनं द्वादशवर्षाणीत्यर्थः, एतच्चाशक्तविषयं ।

यदाह देवलः ।

अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदव्रतचर्य्यामातिष्ठेत अशक्तश्चेत् षट्त्रिंशद्वार्षिकीं चतुर्विंशतिवार्षिकीं चेति ।

एतत्प्रतिवेदविषयं ।

यदाह यमः ।

चरेद्द्वादशवर्षाणि चतुर्विंशतिमेव वा ।

षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत् ॥

बौधायनोऽपि ।

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्य्यमाचरेत्, चतुर्विंशति द्वादश वा प्रतिवेदं संवत्सरार्द्धं वा प्रतिग्रहणाद्वा जीवितस्याखिरत्वात् कृष्णकेशोऽग्नीनादधीतेति श्रुतेः ।

पैठीनसिः ।

द्वादशवर्षाण्येकवेदे ब्रह्मचर्य्याच्चरेत् प्रतिद्वादशं वा सर्वेषु ग्रह-णान्ते वा ।

शङ्ख-लिखितौ ।

द्वादश द्वादशवर्षाणि वा प्रतिवेदं यावद्ग्रहणं वा वेदस्य तावत् ब्रह्मचर्य्यमाचरेत् ।

मनुः ।

षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैविद्यकं व्रतं ।
तदर्द्धं पादिकं वापि ग्रहणान्तिकमेव वा ॥

अत्रार्थः ।

त्रैविद्या ऋग्यजुःसामाख्यवेदत्रयविषयं, तत् षट्त्रिंशदाब्दिकं कार्य्यमेव प्रतिवेदं द्वादशवर्षाणि ब्रह्मचर्य्यमित्युक्तं भवति, अर्द्धिकपक्षे प्रतिवेदं षड्वर्षाणि, पादिकपक्षे तु त्रीण्येव ।

याज्ञवल्क्यः ।

प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके ।

इति ब्रह्मचर्य्यकालनिर्णयः ।

## अथ समावर्त्तनकालः ।

तत्र दक्षः ।

स्वीकरोति यदा वेदं धत्ते वेदव्रतानि च ।

ब्रह्मचारी भवेत्स्नातस्ततः पश्चाद्गृही भवेत् ॥

वेदस्वीकरणं वेदार्थविचारस्याप्युपलक्षणं ।

तथाच स्मृत्यन्तरे ।

वेदमधीत्य च्छन्दोविषयानर्थान् बुद्ध्वा स्नायात् ।

तथाच व्यासः ।

न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुं ।

पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥

यथा पशुर्भारवाही न तस्य लभते फलं ।

द्विजस्तदर्थानभिज्ञो न वेदफलमश्नुते ॥

वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् ।

अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥

योऽधीत्य वेदविद्विप्रो वेदार्थं न विचारयेत् ।

स सान्वयः पशुसमः[1] पात्रतां न प्रपद्यते ॥

अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः ।

स ब्रह्मलोकमाप्नोति ब्रह्मानुष्ठानचिह्नितः ।

श्रुतहीनधनः सोऽपि यथेहामुत्र तद्भवेत् ॥

तथा ।

ज्ञानं कर्म्म च संयुक्तं श्रद्धया कल्पितं यथा ।

---

(१) खरसमः इति ख० ।

अधीतं श्रुतसंयुक्तं तथा श्रेष्ठं न केवलं ॥
पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्जितान् ।
पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥
ऋक्पादमप्यधीत्यान्तर्न्यायतस्तु तदर्थवित् ।
सम्यग्व्रतानि संसेव्य समावर्त्तनमर्हति ॥

एतत्समर्थविषयं एकैकसमाप्तावपि स्नानविधानात् ।

तत्र हारीतः ।

त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्या-व्रतस्नातकश्चेति ।

यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः, यस्तु समाप्य व्रतानि असमाप्य वेदं स व्रतस्नातकः, यः पुनरुभयं समाप्य स विद्या-व्रतस्नातकः ।

याज्ञवल्क्यः ।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

आपस्तम्बेश्चयाजायीत्येके[१] तथा व्रतेनाष्टाचत्वारिंशत्परिमाणेन विद्याव्रतेन चेत्येके, आधानाद्युपरिष्टात्कृच्छ्रविषयवत्सुदकस्तुपस्नृप्रव-नमिपक्वद्धिरस्नायोगस्नानायतिकः संवत्सरमेतद्व्रतञ्चरेत् एतदष्ट-चत्वारिंशत्सम्मितमित्याचक्षते ।

व्यासः ।

गुरुशुश्रूषया विद्यां समाप्य विधिवद् द्विजः ।

(१) पाठोऽयं न समीचीनो विभाति ।

स्नायीत तदनुज्ञातो दत्त्वाऽस्मै दक्षिणां द्विजः ॥

गौतमः ।

विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृतानुज्ञातस्य स्नानमिति ।

विद्यान्ते गुरुरर्थेन हेतुना 'निमन्त्र्यः' प्रष्टव्यः, कोऽर्थस्तुभ्यन्दातव्यः इति पृष्टः स खलु यं ब्रूयात्तमर्थमाचार्याय दत्त्वा स्नायादस्नातौ तदनुज्ञया वेत्यर्थः ।

बुधोऽपि ।

गुरुणानुज्ञातः स्नायादिति ।

इति समावर्त्तनकालः ।

---

## अथाश्रमकालनिर्णयः ।

तत्र ।

चतुर्णामाश्रमाणां समुच्चयो विकल्पश्च तत्र समुच्चयं प्रकृत्य मनुराह ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रनिषेविताः ।
यथोक्तकारिणं विप्रं नयन्ति परमाङ्गतिं ॥

'गृहस्थप्रभवाः' तदुपजीविनः। 'क्रमश इति प्रातिलोम्यं निषिद्धं ।

तथाच दक्षः ।

यथाश्रमानुलोम्यन्तु प्रातिलोम्यन्न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः ॥
यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ।

न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥

तेन मृतभार्येण पुनर्विवाहासामर्थ्येऽपि न ब्रह्मचारिणा भाव्यं, तत्र च ब्रह्मचारि-गृहाश्रमशब्दावुत्तरोत्तराश्रमिणः पूर्वपूर्वाश्रमाना-श्रयणप्रतिपादनपरौ, अन्यथा "प्रातिलोम्यं न विद्यते" इति वचन-मविवक्षितं स्यात् ।

कूर्मपुराणे ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ।
क्रमेणैवाश्रमाः प्रोक्ताः कारणादन्यथा भवेत् ॥
वानप्रस्थाश्रमङ्कृत्वा न गृहं प्रविशेत्पुनः ।
न सन्यासी वने वासं ब्रह्मचर्याञ्च साधकः ॥

पुराणात् ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
अप्रमत्तो द्विजातेन मार्गाः पुच कुवर्त्मना ॥

आपस्तम्बः।

चत्वार आश्रमा गार्हस्थमाचार्य्यकुलवासः संन्यासोवानप्रस्थमिति। तेषु सर्वेषु यथोपदेशमव्यग्रोवर्त्तमान आश्रमं गच्छति, तेषु सर्वेषु वर्त्तमान इति समुच्चयोदर्शितः ।

जावालश्रुतिश्च चतुर्णां त्रयाणां द्वयोर्वा समुच्चय इत्याह ।

ब्रह्मचर्य्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति ।

समुच्चये कालविशेषाकाङ्क्षायामाह मनुः ।

चतुर्थमायुषोभागमुषित्वा द्यगुरोर्द्विजः ।

द्वितीयमायुषोभागं कृतदारोवसेद्‌गृहे ॥
वनेषु च विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषोभागं त्यक्त्वा सङ्गान् परिव्रजेत् ॥

"शतायुर्वै पुरुष इति श्रुत्याभिहितमायुषश्चतुर्थोभागः पञ्चविंशतिवर्षाणि ।

गौतमस्तु विकल्पमाह ।

तस्याश्रमविकल्पमेके ब्रुवते ।

अयन्तु विकल्पोव्रतचर्याश्रमव्यतिरिक्तविषयः ।

वशिष्ठः ।

चत्वार आश्रमा ब्रह्मचारी गृहस्थोवानप्रस्थः परिव्राजकस्तेषां वेदमधीत्य वेदौ वेदान् वा विशीर्णब्रह्मचर्यमिच्छेत्तमाविशेत् ।

वेदान् वेदौ वेति पक्षौ फलभूयस्त्वमभिप्रेत्य, वेदमधीत्याविप्लुतब्रह्मचर्यस्तेषामाश्रमाणां मध्ये यमिच्छेत्तं 'आविशेत्' आश्रयेत्तत्रैव निष्ठां यायादित्यर्थः ।

वामनपुराणे ।

गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम् ।
ब्रह्मचर्येण वा कालं नयेत्सङ्कल्पपूर्वकम् ॥
वैखानसोवाथ भवेत्परिव्राड्‌थ वेच्छया ।
गुरवे तु वरं दत्त्वा यायाद्गुर्वनुमोदितः ।
गृहं वनं वोपवसेद्‌व्रजेद्वापि द्विजोत्तमः ॥

उशनाः ।

आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमं ।

आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥

अयञ्च विकल्पः समुच्चयानुष्ठानरहितानां वेदितव्यः ।

इत्याश्रमकालनिर्णयः ।

---

## अथोद्वाहविकल्पः ।

तत्र बृहस्पतिः ।

वेदानधीत्य विधिना समावृत्तोऽप्लुतव्रतः ।
समानामुद्वहेत्पत्नीं यशः-शील-वयो-गुणैः ॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥
गुरुं वा समनुज्ञाप्य प्रदाय गुरुदक्षिणां ।
सदृशानाहरेद्दारान् मातापितृमते स्थितः ॥
वेदं वेदौ च वेदान् वा ततोऽधीत्य यथाविधि ।
अविशीर्णब्रह्मचर्यो दारान् कुर्वीत धर्मतः ॥

अत्र नैष्ठिकानन्तरं शङ्ख-लिखितौ ।

अथानुज्ञातो गुरुणाद्युपनयनं कृत्वा सवर्णां परिणीय ब्राह्मादि-मोद्वाहेन ।

दक्षः ।

स्वीकरोति यदा वेदांश्चरेद्वेदव्रतानि च ।
ब्रह्मचारी भवेत्तावदूर्द्ध्वं स्नातो गृही भवेत् ॥
अनधीत्य द्विजोवेदान् स्नात्वोद्वाह्य यथा तथा ।
अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे ॥

युग्मेऽब्दे सम्प्रदा विद्या-धर्म-कामायुषां सदा।
भर्त्तुरिष्टाभवत्योजे वर्षे कन्या लसंशयम्॥
माघमासे भवेदूढ़ा कन्या सौभाग्यसंयुता।
फाल्गुनोढ़ा भवेत्साध्वी वैशाखे पुत्रिणी भवेत्॥
धर्मयुक्ता भवेज्ज्यैष्ठे धनिनी कार्त्तिके भवेत्।
देवपूजारता नित्यं मासे स्यात् सोमदेवते॥
उक्तवर्ज्जितेष्वन्येषु मासेषु प्राप्नुयाद्यदि।
विवाहं कन्यका सा स्यात् सुत-शीलार्थवर्जिता॥
सितपक्षे तु यशसा प्रकाशयति सा कुलम्।
कन्योढ़ा लक्षिताशे च अशेषे चेन्निदर्शना(१)॥

तथा।

शुक्लपक्षं प्रशंसन्ति विशेषेणोत्तरायणं।

वशिष्ठः।

आपूर्यमाणपक्षे तु विवाहो ब्राह्मणस्य तु।
इतरेषां तु वर्णानां कृष्णपक्षे विधीयते॥

व्यासः।

उपायनोपरिक्तासु तिथिषु स्यादमहिता।
दुर्भगा चेति शेषासु सुत-सौभाग्यसंयुता॥

तथा।

कल्याणभाविता प्रीतिः सौभाग्यं धनसंचयः।

(१) पाठोऽयं आदर्शपुस्तकतोऽनुमितः परन्त्वयं न समीचीनः।

सुखार्थी बहुविघ्नानि शौक्र-सौख्यप्रकीर्त्तयः ॥
शोकामयौ सुदः सौख्यं भाग्यमेवात्मजादयः ।
उपद्रवाः पूर्णफलं शुक्ले प्रतिपदादयः ॥

तथा ।

गुरु-शुक्रेन्दुपुत्राणां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्त्तुश्चित्तानुसारिणी ॥
अर्क-तत्पुत्र-भौमानां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ॥
ग्रहवर्गगतोऽनिष्टस्थानप्राप्तग्रहेऽभयदः ।
यदा तदा तद्दिवसे विवाहो न प्रशस्यते ॥
यस्य दिवसे प्रोक्तं ग्रहस्य यद्यत्फलं ।
तद्वशेवं तदीयायां होरायामपि निर्द्दिशेत् ॥
प्रशस्तं जन्मताराम्नु केचिदाहुस्तथापरे ।
हितारं जन्मनक्षत्रे त्यक्त्वा शेषां[1] फलप्रदं ॥
अर्कादीनां दिने युक्तं यत्फलं तद्दिनग्रहे ।
तद्वर्गेऽपि भवेत्फलं होरायान्तु विशेषतः ॥
आदित्याद्यन्यवारेषु घतोरर्कादयस्तथा च ।
सप्ताहोऽधिपतिस्तस्य वदन्तीति महर्षयः ॥
दिवसे फलमेतेषां प्रहरे यदिहोदितं ।
तन्मासर्त्तर्यनाब्देषु यद्देवाविकलं भवेत् ॥

---

(१) त्यक्त्वा शेषां इत्ययं पाठो न समीचीनः ।

तिर्य्यक्पञ्चोर्द्ध्वगाः पञ्च रेखे द्वे द्वे च कोणगे।
शङ्कुरेखादिभिर्न्यस्य भानि तत्र प्रदक्षिणं॥
कृत्तिकादीनि यत्तस्मिन्नेकराशिस्थितं ग्रहं।
नक्षत्रममुना विद्धं विवाहे स्यादशोभनं॥

तथा।

मैत्रं पित्र्यं तथा वैश्वं ब्राह्म-नैर्ऋतदैवतं।
अहिर्बुध्न्यार्य्यमा वापि पौष्ण-धातृ-निशाकराः॥

तथा।

आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च।
षड्भागशेषेष्वन्येषु नक्षत्रेषु न शस्यते।
रेवत्यर्द्धचतुर्भागे विवाहः प्राणनाशनः।
स्वाम्यजेषु त्रिषु सदा पाणिग्रहणमिष्यते॥

तथा।

हस्तोत्तराणि वायव्यं मैत्रमूले च रेवती।
रोहिणी सौम्य-मैत्रञ्च शुभं पाणिग्रहे सदा॥
त्यजेद्विषुवतं यत्नाद्व्यतीपातायनं तथा।
उत्पातदूषितञ्चर्क्षं वैधृतिञ्च विशेषतः॥

वात्स्यः।

सावित्र्यानिलसंयुक्तान् मुहूर्त्तानपि निर्द्दिशेत्।
समानदैवतैस्तुल्यं नक्षत्रैः फलमादिशेत्॥
मुहूर्त्तेष्वभिजिद्वर्ज्जं शुद्धाहे कालचिन्तकः।
अष्टमो दिवसस्यैव योऽभिजित्संज्ञितः क्षणः॥

स ब्रह्मणा वरो नित्यं सर्वकालः शुभप्रदः ।
उपग्रहोदयाद्यैश्च पापैस्तेन हि बध्यते ॥

तथा ।

वैवाहिकर्क्षदैवत्यमुहूर्त्तेष्वपि जायते ।
पाणिग्रहः कुमारीणामभीष्टार्थफलप्रदः ॥

वैधव्यन्दिनबान्धवस्य जगतीसूनोरपत्यक्षयः
सौम्यस्यार्थपरिच्युतिः सुरगुरोर्दास्यं तथा दुःखिता
प्राभव्यं भृगुनन्दिनः सुतिरपि त्यागश्च सौरेः पुन-
र्नारीणां गणिकात्वमेव तमसः केतोश्च वैधाद्वधः ॥

सारावल्यां ।

सर्वेऽप्यनुकूलाः शशि-सूर्यौ नैव गोचरविशुद्धौ ।
अप्यूढ़ा शक्रधूर्य्यमस्य धनदस्य वा कुलटा ॥

रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ ।
वर्जयेत्सर्वकर्माणि व्रत-स्वस्त्ययनानि वा ॥

गुरौ न जन्माष्टमगे विवाहः
शनैश्चरे जन्मगते तथैव ।
न चाष्टमे शीतकरे च कुर्याद्-
रवौ वराणेधनगे प्रयत्नात् ॥

ग्रहणद्वयमध्यस्थं ग्रहणादौ सप्तरात्रमपि हन्त ।
यात्रा-विवाहसमयं मनसापि न चिन्तयेत् प्राज्ञः ॥

व्रतबन्धं द्विजातीनां उद्वाहं सुन्दरीषु च ।
गुरावस्तमिते नित्यं न कुर्याद्भार्गवे तथा ॥

विवाहमपि नेच्छन्ति मुनयः काश्यपादयः।
यथा पौषे तथा चैत्रे केचिदिच्छन्ति सूरयः।
तथा सिंहगते जीवे विवाहे बादरायणः॥

वशिष्ठः।

विवाहे व्रतबन्धे च यात्रायां व्रतकर्मणि।
गुरावस्तमिते शुक्रे जातस्य परिणीयते॥
गुरुर्नष्टः पतिं हन्याच्छुक्रोनष्टस्तु कन्यकां।
चन्द्रे नष्ट उभौ हन्ति विवाहे तौ विवर्जयेत्॥
पश्चादभ्युदितोबालो दशाहं प्राग्दिनत्रयं।
पञ्चं वृद्धस्तु पूर्वेण पश्चाहं पश्चिमे सितः॥
विचित्तमुपयाति नाशमन्तु-प्रतापौ दक्षिणे लयने।

वराहः।

देशाचारस्तावदादौ विचिन्त्यो-
देशे देशे या स्थितिः सैव कार्या।
लोके दुष्टं पण्डिता वर्जयन्ति
दैवज्ञोऽतोलोकमार्गेण यायात्॥
इहस्पतौ ग्रोभनगोचरस्थे
विवाहमिच्छन्ति हि दाक्षिणात्याः।
रवौ शुभस्थे च वदन्ति गौडा:
न गोचरोमालवके प्रमाणं॥

गौडाः सूर्यबलं प्राडुर्दाक्षिणात्या गुरोर्बलं।
मालवा लग्नमिच्छन्ति बाढानां स्थानबलं॥

तारावलं मागधीयाः श्रयन्ति
कुर्वन्ति तारेन्दुबलेन माद्राः।
तथोत्तरामौकुलवर्णिकष्टाः
माण्डव्य-तिम्तीर-तुषारकेषु॥
ग्रहर्क्ष-योगास्तिथि-वार-योगाः
शुभाशुभा ये कथिताः प्रभूताः।
वङ्गेषु तत्प्रोक्तफला भवन्ति
नान्येषु देशेषु विचिन्तनीयाः॥

शारावल्यां।

षष्ठोविलग्नाद्रविरष्टमो वा
भागो मुहूर्त्ता यदि युज्यते च।
सूर्येन्दु-तारावलसम्प्रयुक्ता
गोधूलिका सर्वफलप्रदायी॥

लग्नशुद्धिर्यदा न स्यात्रीवनन्तु प्रशस्यते।
तदा तु सर्ववर्णानां कालोगोधूलिकः स्मृतः॥
राशिर्न ज्ञायते यत्र नापि लग्नस्य निश्चयः।
लग्ने सूर्यावली यस्मिन् तत्र सर्वं प्रशस्यते॥
सौराष्ट्रेकबलोज्ञेयो माहेयोद्विबलः स्मृतः।
त्रिवलस्तु बुधोज्ञेयश्चतुर्गुणबलोगुरुः॥
शुक्रः पञ्चबलोज्ञेयश्चन्द्रः षड्बल उच्यते।
सर्वग्रहबलैर्नित्यं तुल्य एवं दिवाकरः॥
यात्रा विवाहकालेषु कार्येषु विविधेषु च।

यत्र सूर्य्यबलं नास्ति नास्ति सर्व्वं ततोबलं ॥
पुंसामर्कः स्मृतो योनिर्योषितामम्टतद्युतिः ।
अतोनृ-योषितोराप्तं बलं चन्द्र-प्रभाकृतं ॥
यत्र चन्द्रश्च तारा च द्वावेतौ बलवत्तरौ ।
दोषास्तत्र प्रलीयन्ते यदि स्युः सर्व्वतोऽपगाः ॥
नष्टे शुक्रे तथा चन्द्रे गुरावस्तमुपागते ।
न विवाहो न यात्रा वै नैव दानं समाचरेत् ॥
द्वादश-दशम-चतुर्थे जन्मनि षष्ठाष्टमे तृतीये च ।
प्राप्ता पाणिग्रहणं जीवे वैधव्यमाप्नोति ॥
सिंहे च भगदैवत्ये गुरौ पुत्त्रवती भवेत् ।
अत्यन्तसुभगा साध्वी धन-धान्य-पतिप्रिया ॥

वात्स्यायनः ।

पञ्च-तिथि-लग्न-करण-लग्नेन्दर्क्ष लग्न-ताराभ्यः ।
पाणिग्रहणे योज्यास्तत्त्वविदैकादशपदार्थाः ॥

विवाहकर्म्म नेच्छन्ति प्रसुप्ते शार्ङ्गधन्वनि ।
एतावच्च गतानान्तु माण्डव्याद्या महर्षयः ॥

सिंहस्थिते सुरगुरावधिमासके च
ज्येष्ठे तथाद्यतनुजस्य तथा सुतायाः ।
कुर्व्वीत नार्क-गुरुनीचगयोर्विलग्न-
जन्मर्क्षयोश्च निखिलान्यपि मङ्गलानि ॥

रविणा चन्द्रयुक्तेन नारी वैधव्यमाप्नुयात् ।
भौमेन म्रियते चोरैः शुक्रे पापं समाचरेत् ॥

रङ्गजनिपुणा सौम्ये तद्गतज्ञा रतिप्रिया ।
पतिमन्यं व्रजेत्क्षिप्रं केतुचन्द्रग्रहणान्विते ॥
गुरुश्चन्द्रश्च जामित्रे तिष्ठेद्यदि बलान्वितः ।
धन-सौभाग्य-पुत्रांश्च लभते नात्र संशयः ॥
मणि-मुक्ता-प्रवालैश्च सुवर्णाभरणैः शुभैः ।
शोभतेऽनुमता शिष्टा गुरुणा यदि वीक्ष्यते ॥
सा तु भर्तुः प्रिया नित्यं बुधे चन्द्रेऽथ सप्तमे ।
आदित्येन तु वैधव्यं महादारिद्र्यमेव च ॥
दृष्टे चन्द्रे च भौमे च न कुर्य्याद् याभिग्रासनं[1] ।
वन्ध्या वा मृतवत्सा वा शनैश्चरनिरीक्षिते ॥

वशिष्ठः ।

मरणं चात्मपत्नीत्वं दास्यं दौःशील्यमेव च ।
चन्द्रयोगे ग्रहाः कुर्य्यूरवि-रक्तार्कि-भार्गवाः ॥
नैपुण्यं कुलपूज्यत्वं पौंश्चल्यं व्याधिमेव च ।
बुध-जीवयुताः कुर्युः कर्त्तुश्चैव यथाक्रमात् ॥
द्वाभ्यां त्रिभिश्चतुर्भिर्वा द्वारणैः सहितः पुनः ।
दारिद्र्यं मरणं वापि कन्यायाः कुरुते ध्रुवं ॥
व्रजत्यन्यजने नारी नैरिकावरभूषिता ।
विदेशं वा व्रजेच्चन्द्र सौम्यैश्चैव युतः शशी ॥
व्रयाणां मिथुनः श्रेष्ठस्ततः कन्या ततस्तुला ।
तथा नैचविलग्नाश्च विवाहे च फलाः स्मृताः ॥

---

(१) न कुर्य्यादाभिचारग्रहनमिति क० ।

अन्ये विषतुरादीनामंशा ग्राह्या मनीषिभिः।
युग्म-कन्या-तुलाद्यास्तु न स्वांशो न परांशकः॥
सुहृदः सौम्यषड्वर्गाः स्वसौम्यनिरीक्षितः।
यो वा विवाहकालेषु प्रवेशे शुभकर्मणि॥
शाश्वतं कुरुते नारं शुक्र-जीवसमागमे।
जीव-भास्करयोः स्थातं व्रतस्थं कुरुते पतिं॥
द्वेषेश-सौम्ययोर्योगे त्यक्त्वा बन्धून् पतिं तथा।
करोति तस्करं नारं कन्या नैवात्र संशयः॥
विंशांशः स्वनाशेन यद्युदाहे न दृश्यते।
पुंविनाशस्ततोऽन्यांशे ह्येवं योषितस्ततः॥
द्वादश-तृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रस्य।
एतानि पादसङ्ख्या फलानि चैवं प्रयच्छन्ति॥

व्यासः।

मेषाद्या ये मया पूर्वमुक्ता द्वादश राशयः।
तेषां कन्या तुला चैव मिथुनश्च प्रदृश्यते॥
कन्या-तुलासु मेषेषु स्वांशेष्वन्यांशके न तु।
चतोंऽशके फलं स्त्रत्नं वदतो मे निशामय॥
तेषां वक्रोढकन्यान्यकुमारगतमानसा।
सुता सुभगे साध्वी युग्मांशे शीलसंयुता॥
वेश्या कुलीरभागे स्यात् तीक्ष्णेषा तथैव च।
बहुप्रसवा सिंहांशे पितृवेश्मरता तथा॥
रूप-शील-गुणोपेता कन्यांशे स्यात् कुमारिका।

सुखान्विता तुलस्यांशे दुःशीला मलदूषिता ॥
वेश्या कुलक्षुणीत्यन्ते वृश्चिकांशेऽतिकोपना ।
चतुर्थवर्गे कुलटा मृग-कुम्भ-झषांशके ।
सुदुष्टा ऋन्यसक्ता स्यात् कन्या नात्र च संशयः ॥

गर्गः ।

अधिमासकृतान्दोषान्तुपवासनोद्भवान् ।
मुहूर्त्त-करणोपेतांस्तिथ्युत्पातभवांश्च यान् ॥
पञ्चदृष्टिं दुराधर्षां द्रेक्काणांशकराशिजान् ।
गुरु-शुक्रबुधाघ्नन्ति लग्ने सम्यग्व्यवस्थिताः ॥

आचार्य्यः ।

लग्नराशियुक्तो जामित्रगतश्च वर्जितोराहुः ।
लग्नस्थे वैधव्यं जामित्रगते च कन्यकामरणम् ॥
राशियुक्ते प्रव्रज्यास्ता न चितये सदा वर्ज्ये ।
प्राक्लग्नगे मृत्युः स्याद्धनहानिर्द्वितीयगे ॥
दुश्चिक्येऽर्थविवृद्धिः स्याद्बन्धुनाशश्चतुर्थगे ।
सुतनाशः सुतस्थे स्याच्छत्रुवृद्धिस्तथारिगे ॥
जामित्रस्थे च वैधव्यं चायुर्वृद्धिस्तथाष्टमे ।
धर्मगे धनहानिः स्यात् कर्मगेऽर्के विशीलता ॥
लाभः स्यादायगे भानौ व्ययोद्वादशगे भवेत् ।
चन्द्रे व्ययप्रिया लग्ने द्वितीये धनिनी भवेत् ॥
तृतीये सुभगा साध्वी बन्धौ बन्धुप्रिया भवेत् ।
सुतस्थे कन्यका माता षष्ठस्थे मृत्युमाप्नुयात् ॥

जायास्थे सपत्नी स्यान्मृत्योर्मृत्युमवाप्नुयात् ।
कन्या प्रजावती धर्म्मे विकारस्थारकर्म्मणि ॥
भर्त्तृप्रियोपयुक्ता च यम्निन्येकादशस्थिते ।
वर्गाणी द्वादशे च स्यात् कन्यका शीतदा शनौ ॥
अनिष्टग्रहणं यातौ प्रशस्तफलदः शशी ।
सौम्यांशकस्थो मैत्रेण दृश्यते चेद्बलीयसा ॥
वैधव्यं लग्नगे भौमे कन्यका मृत्युमाप्नुयात् ।
अग्नि-चौरभयार्त्ता स्यात् द्वितीयस्थे धरासुते ॥
तृतीयस्थेऽर्थसम्पन्ना बन्धुदुष्टा चतुर्थगे ।
पुत्त्रहीना सुतस्थे स्यादरिगे सुतभागिनी ॥
सप्तमस्थे महीपुत्त्रे पुंश्चली खलसंयुता ।
असृक्स्रावं धरासूनौ पुत्त्रस्थे कन्यकाप्नुयात् ॥
नवमे भर्त्तृविद्दिष्टा दशमे कुहकप्रिया ।
धनान्विता तथायस्थे नष्टार्था व्ययगे भवेत् ॥
लग्नस्थे चन्द्रपुत्त्रे स्याद्धर्म्मज्ञा सुप्रजा स्थिरा[१] ।
स्वकुटुम्बरता नित्यं धनस्थे सोमनन्दने ॥
श्वश्रू-श्वशुरयोः पूजा तृतीयस्थे शशाङ्कजे ।
चतुर्थे बन्धुपूजा स्यात्सुभगा धनसंयुता ॥
बहुपुत्त्रा सुतस्थे स्याद्धतशत्रुस्तथाङ्गिरे ।
कष्टामापदमाप्नोति पुत्त्रहानिं तथैव च ॥
सप्तमस्थेऽष्टमस्थे च रोगार्त्ता दुःखभागिनी ।

(१) स्थितेति ख० ।

तपोरता धर्मगे स्वाम्यायाशीला च कर्मणा ॥
सुत-भृत्य-धनोपेता भौमे द्वादशगे भवेत् ।
कन्या बहुयशंयुक्ता शशाङ्कतनये सदा ॥
गुरौ लग्नगते कन्या धर्मशीला बहुप्रजा ।
सुदीर्घमायुराप्नोति निधनं निधने भवेत् ॥
अतिप्रमुदिता जीवे वृश्चिकस्थे भवेत्सदा ।
सबन्धुवृद्धिं जानीयात् सर्वकामगुणान्विताम् ॥
सुशीलस्था चतुर्थस्थे पञ्चमस्थे बहुप्रजा ।
सपत्नीयुक्ता षष्ठस्थे बहुमूला स्ववेश्मनि ॥
विरूपा दुर्भगा स्वार्था व्यनक्ति विमलं यशः ।
सुतकर्मसु संसिद्धिं प्राप्नोति दशमे गुरौ ॥
विचित्रमाल्याभरणा पुत्रयुक्ता च कन्यका ।
सुवर्ण-मणि-वस्त्राढ्या भवत्येकादशे गुरौ ॥
व्ययस्थे सततोदारा ददात्यर्थमतन्द्रिता ।
आयुर्धर्मादिभिर्युक्ता लग्नस्थे भृगुनन्दने ॥
प्रभूतगुणयुक्ता स्वात्मपणा च धनाश्रिते ।
पुंश्चली देवररता कन्या शुक्रे तृतीयगे ॥
यत्र सा भूषिता कन्या सुरूपा धनसंयुता ।
नित्यं चतुर्थगे शुक्रे पञ्चमस्थे बहुप्रजा ॥
पत्युश्च बन्धुवर्गस्याविराद्या षष्ठगे भृगौ ।
बन्धकी सप्तमस्थे स्यान्मार्गवे लोकगर्हिता ॥
व्याध्यर्दिता भवेच्छुक्रे मृत्युस्थे यमसाधनम् ।

भार्गवे नवमस्थे चाद्धर्मयुक्ता प्रियंवदा ॥
सत्कर्मयुक्ता दशमे शुक्रे धर्मपरायणा ।
विधवार्थान्विता त्याज्या भवत्येकादशे भृगौ ॥
व्ययस्थे भार्गवे कन्या व्ययशीला प्रजायते ।
सौरे लग्नगते कन्या पुंश्चली दुर्भगा कृशा ॥
निर्धना कृपणा दीना धर्मस्थाकान्तगे भवेत् ।
पुत्रहीनार्तिदुःखार्त्ता चक्षूरोगेण च पीडिता ॥
पञ्चमस्थे सुपुत्रा स्यात् षष्ठस्थे हतबान्धवा ।
गर्भस्रावार्दिता नित्यं सप्तमस्थेऽर्कनन्दने ॥
अष्टमस्थेऽर्कपुत्रे स्यान्नित्यमामयवर्जिता ।
नष्टधर्मव्रता कन्या धर्मस्थेऽर्कात्मजे भवेत् ॥
चतुर्थ-सप्तमस्थस्य मृत्यु-वैधव्यकृद्भवेत् ।
राहुर्गेहेष्वथान्येषु निष्फलः स्यादुपस्थितः ॥
पञ्च पाणिग्रहे दोषान् वर्जयेद्दैव चिन्तकः ।
दारिद्र्यं मृत्यु-वैधव्यं पौंश्चल्यमनपत्यताम् ॥
अष्टमाद्यर्द्धमासस्य तीर्थे वार्ये शुभाशुभाः ।
लग्नस्य पंचमस्थानाच्छुभस्थानस्थितान् ग्रहान् ।
कार्य्योविवाहो निर्दोषः कालो यस्मात्सुदुर्लभः ॥
मूर्त्तिकर्मात्मजद्यूनत्रिकोणगते गुरौ ।
भार्गवे च विनश्यन्ति सर्वे दोषा विलग्नगे ॥
त्यक्त्वा च अव-नैधनानि तु सदा सौम्यग्रहाः सच्छुभं
चोत्कृष्टासुरपूजितः प्रथमधरोदुश्चिक्यलाभार्थगः ।

पापस्य ×××× चन्द्रभवनं प्राप्ता चितेर्नन्दनं
शुद्धा नैव भवेत् स वर्ज्जितगमनो पाणिग्रहेष्विष्टदा(१) ॥
यो जन्मनि जन्मस्थादष्टमराशिस्थितो भवेत् खचरः ।
स विवाहलग्नवर्त्ती शुभोऽप्यशुभं ददाति फलम् ॥

शौनकः ।

पञ्चभिरिष्टं रिष्टञ्च पुष्टमनिष्टमादिष्टं ।
स्थानादिबलसमेतैश्चतुर्भिरपि खगैः ॥

अर्केऽनुकूले सुरपूजिते च
दृष्टिं प्रपन्ने भृगुनन्दने च ।
भवन्ति नार्य्यः सुत-सौख्य-सम्पत्-
सौभाग्यभाजः शतमन्युपेताः ॥

पराभवे सूर्य्यविधूमर्द्दे
शृङ्गाटके धूमशिखे कुजे च ।
उपप्लवप्रापिणि चक्रबन्धे
प्राप्ते च पापान्तरगे च चन्द्रे ॥

अस्तङ्गतयोर्वा परिवेषिणोर्वा
पाणिग्रहः खण्डितबिम्बयोर्वा ।
शीतोष्णभान्वोर्विपरीतखेट-
कदम्बकाक्रान्तिकयोर्निरस्तः ॥

पराशरः ।

दशपञ्चशुभकलापाते समधनस्थे चतुर्थोत्सेधे ।

---

(१) श्लोकोऽयं आदर्शपुस्तक एव मुद्रितः परन्त्वयं न समीचीनो भाति ।

द्वादशमुखपरिणाहे अष्टपलषष्टिसपूरणी घटिका ॥

गालवः ।

ताम्रपात्रं चिद्रेणैकं षट्त्रुक्षसमायुतं ।

इत्युद्वाहकालः ।

---

## अथ वैवाहिककर्मकालः ।

गालवः ।

कन्याणद्वन्यवाङ्कुरमङ्गलपल्लवेदिवर्णकाद्यखिलं ।
तत्सम्बन्धिगतागतस्तूत्वे वैवाहिके कुर्य्यात् ॥
वैवाहिके तु दिवसे शुभे वाथ तिथौ शुभे ।
आसिंचरात्रौ कन्याया लग्ने शुभसमन्विते ।
चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा ॥

इति वैवाहिककर्मकालः ।

---

## अथ परिणयनकालनिर्णयः ।

तत्र बृहस्पतिः ।

पितुर्गेहेतु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणोमदमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
वृषलीफेनपीता यो ब्राह्मणोमदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥

आपस्तम्बः ।

प्राप्ते च द्वादशे वर्षे रजःस्त्रीणां प्रवर्त्तते ।
यस्यां विवाहयेन्मोहात् स ज्ञेयो वृषलीपतिः ॥
त्रिंशद्वर्षोद्दशाब्दान्तु भार्य्यां विन्दति नग्निकां ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

मनुः ।

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
अष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ।
वर्षैरेकगुणां भार्य्यामुद्वहेत् त्रिगुणः स्वयं ॥

इति परिणयनकालनिर्णयः ।

---

## अथ देयकन्याकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

अष्टवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥

संवर्त्तः ।

अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

अत्र 'वृषली' रजस्वला ।

तथाच देवलः ।

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥

वृहस्पतिरपि ।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

विष्णुः ।

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा भवेत् वृषली ज्ञेया परंस्ताञ्च न दुष्यति ॥

एतच्च प्रायिकं, कासाञ्चिदर्वागेव रजोदर्शनात् ।

अतएव यमः ।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला ॥

यत्पुनर्यम-पराशरापस्तम्बैरुक्तं ।

प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितं ॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
प्राप्ते द्वादशमे वर्षे रजः स्त्रीणां प्रवर्त्तते ॥

एतदपि प्रायिकं, कासाञ्चित्तथापि रजोदर्शनाभावात् ।

अतएवाह मनुः ।

त्रिंशद्वर्षोवहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

एवञ्च रजोदर्शनात्पूर्वं विवाह इत्युक्तं भवति ।

तथाच गौतमः ।

प्रदानामाप्तृतोरप्रयच्छन्दोषी प्राग्वाससः प्रतिपत्तेरित्येके ।

यमः।

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्।

वशिष्ठः।

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता।

ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति॥

संग्रहे।

यावच्चेलं न गृह्णाति यावत्क्रीडति पांशुभिः।

यावद्दोषं न जानाति तावद्भवति नग्निका॥

अमरसिंहः।

नग्निकानागतार्त्तवेति।

अङ्गिराः।

अनवाप्तरजा गौरी प्राप्ते रजसि रोहिणी।

अव्यञ्जना तु या प्रोक्ता कुचहीना तु नग्निका॥

व्यञ्जनेष्वथ जातेषु सोमो भुङ्क्ते तु कन्यकां।

पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलां॥

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्।

विवाहो ह्यष्टवर्षायाः कन्यायाः शस्यते बुधैः॥

बृहस्पतिः।

व्यञ्जने तु कुचं चन्द्रात्पित्तम् चन्द्रात् पयोधरे।

चन्द्रादिहत्य पूर्वञ्च प्राप्ते रजसि कन्यका॥

पराशरः।

माता चैव पिता चैव ज्येष्ठोभ्राता तथैव च।

चत्वारोऽपि[१] नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

पैठीनसिः।

यावन्नोद्भतौ स्तनौ तावद्देया। अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकं प्राप्नोति पितामहः प्रपितामहश्चेति विष्ठायां जायते तस्मान्नग्निका देया।

याज्ञवल्क्यः।

अप्रयच्छन्नवाप्नोति भ्रूणहत्यामृतावृतौ।

नारदः।

यावन्तश्चर्तवस्तस्याः समतीयुः पतिना विना।

तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति ताम् ॥

यत्पुनर्मनुनोक्तं।

काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि।

न चैवैनां प्रयच्छेत गुणहीनाय कर्हिचित् ॥

तद्गुणवति सम्भवति गुणहीनाय न दद्यादित्येवंपरं, न पुनर्गुणहीननिषेधार्थं।

यत आह यमः।

दद्याद्गुणवते कन्यां नग्निकामेव प्रक्षितः।

न तेन गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

इति देयकन्याकालनिर्णयः।

---

(१) चत्वार इति ग०।

## अथ स्वयम्वरकालनिर्णयः ।

यमः ।

कन्या द्वादशमे वर्षे प्रदातुर्न गृहे वसेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयं ॥

मनुरपि ।

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्द्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिं ।
अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयं ।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥

सोऽपि न पापमाप्नोतीत्यर्थः ।

बौधायनः ।

अविद्यमाने सदृशे गुणहीनमपि भजेत् ।

'सदृशे' गुणवति ।

वशिष्ठः ।

कुमारी ऋतुमती त्रीणि त्रीणि वर्षाण्युपासीत, ऊर्द्ध्वं त्रिवर्षेभ्यः पतिं विन्देत तुल्यं ।

यत्तु गौतमेनोक्तं ।

त्रीनृतूनतीत्य स्वयं युज्यते ।

यच्च विष्णुनोक्तं ।

ऋतुत्रयमुपासीत कन्या कुर्यात्स्वयम्वरं ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनस्तथा ॥

तदृतुत्रयादर्वाक्निषेधपरं, यदा तु न वरं सममवाप्तुमलं तदा ऋतुत्रयादूर्ध्वमपि वरयेत् ।

कात्यायनः ।

वरयित्वा तु यः कश्चित्प्रणश्येत् पुरुषो यदा ।
रक्तागमांस्त्रीनतीत्य कन्यान्यं वरयेत्पतिं ॥

'रक्तागमान्' ऋतून् ।

नारदः ।

प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद्वरं ॥

'प्रतिगृह्य' वरयित्वा ।

केचित्तु ऋतुत्रयादूर्ध्वं स्वयम्वरविधायकं पूर्वोदाहृतविष्णु-गौतम-नारद-कात्यायनवचनसमानार्थत्वेन व्याचक्षते, तदयुक्तं । तत्र हि पितुरदानं प्रकृतं न तु वरयितुर्देशान्तरगमनं मरणं वा तस्मात् क्रमानुरोधात्पूर्वैव व्याख्या श्रेयसी । यदा तु नैवं कश्चित्तात्कन्या राजानमाव्रजेत्, ऋतुत्रयं तत्र वरं प्रतीक्ष्य वरयेत् स्वयं, कश्चिद्दाता पक्षेषु मध्ये ।

याज्ञवल्क्यः ।

गम्यन्त्वभावे दातॄणां कन्या कुर्यात् स्वयम्वरं ।

'गम्यं' गमनार्हं ।

इति स्वयम्वरकालनिर्णयः ।

---

## अथ चतुर्थाश्रमस्वीकारकालनिर्णयः ।

उषित्वैवं ततः सम्यक् तृतीयं त्वाश्रमं प्रति ।
चतुर्थमाश्रमं गच्छेत् कृतहोमो जितेन्द्रियः ॥

मत्स्यपुराणे ।

चतुर्थे त्वायुषः शेषं प्रमथित्वा प्रमं व्रजेत् ।
वेद-सोम-मखान्याप्य वानप्रस्थोऽनुनिस्ततः ॥
आश्रमादाश्रमं सद्यः पूतो भवति कर्मभिः ।
सोऽपि तस्य पिता तादृक् क्रमेण सुसमाहितः ॥
वानप्रस्थं समास्थाय चतुर्थाश्रममभ्यगात् ।
वने चरित्वैव(१) तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्तसङ्गः परिव्रजेत् ॥

तृतीयं भागमिति यावता कालेन तपःसिद्धिः विषयाभिलाषस्य निवर्त्तते तावद्विवक्षितः, न हि मुख्यस्तृतीयः कालो न यावति च वयसि मदावेशः तदा तदा संवेपते तदा परिव्रजेदित्यर्थः ।

आश्रमादाश्रमं गत्वा कृतहोमो जितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तः प्रव्रजेत्प्रेत्य वर्द्धते ॥

समुच्चयपक्षाश्रयमेतत्, यदा ब्रह्मचर्याश्रम-वानप्रस्थाश्रमौ कृत्वो-भयधर्मकानुष्ठानेन जितेन्द्रियः तदा प्रव्रजन्वर्द्धत इति पूर्वाश्रम-धर्मानुवादः ।

मार्कण्डेयपुराणे ।

अनुत्पाद्य सुतान्देवानसन्तर्प्य पितॄंस्तथा ।

(१) वनेऽनुचरित्वैवेति ख० ।

भूतादींश्च कथं मौढ्यात् स्वर्गतिं गन्तुमिच्छसि ॥

कालिकापुराणे।

अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्मतः।
ऋणानि त्रीण्यपाकृत्य इष्ट्वा यज्ञैश्च संन्यसेत् ॥
गुरुणानुमतः स्नात्वा सदारो वै द्विजोत्तमः।
अनुत्पाद्य सुतं नैव ब्राह्मणः प्रव्रजेद्गृहात् ॥

ब्रह्मवैवर्त्ते।

ऋणत्रयापाकरणमविधायाजितेन्द्रियः।
राग-द्वेषावनिर्जित्य मोक्षमिच्छन् पतत्यधः ॥

मनुः।

ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥

मोक्षैकफलत्वात् ज्ञानमेव चात्र मोक्षशब्देनोच्यते, अतएव मोक्षं सेवमान इत्युक्तिः।

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।
इष्ट्वा तु शक्तितो यज्ञैर्मनोमोक्षे निवेशयेत् ॥
अनधीत्य द्विजोवेदं अनुत्पाद्य तथात्मजान्।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥

ऋणत्रयापकमानित्येतरपक्षनिन्दावचनं न पुनः प्रतिषेधः उदितानुदितहोमवत्, अन्यथा "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेदिति प्रत्यक्षजावालश्रुतिविरोधः स्यात्।" "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः

एव वा अनूचानः पुत्री यज्ञी ब्रह्मचारी वाऽसीति एतत्तैत्तिरीय-श्रुतिवचनमपि समुच्चयपक्षाश्रयमेव ।

ग्रन्थ-शिखीनौ ।

वनवासादूर्ध्वं शान्तस्य परिणतवयसः कामतः परिव्रजनमेवाग्नि-मात्मन्यारोप्य अपगतभय-लोभ-मोह-क्रोध-शोक-द्रोह-मद-मत्सर-कलुषशोषितवेदनावस्थितमनसः अद्वारानियतं भवति तस्मात्तद्-हरेवोपायीत यदहरेव संन्यसेत् सर्व्वारम्भपरिग्रहानुत्सृज्य ।

विष्णुपुराणात् ।

पुत्त्र-द्रव्य-कलत्रेषु त्यक्तस्नेहो नराधिपः ।
चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः ॥
दिव्या दिव्ये च भोगे तु विषये पञ्चलक्षणे ।
वृष्टानुश्राविके चैव विरक्तः संन्यसेद्वनात् ॥

कूर्मपुराणे ।

किञ्चिच्छ्रेयस्करतमं लोकेऽस्मिन् ब्रह्मसत्तमाः ।
यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः ॥
आराध्य तपसा देवं योगिनं परमेश्वरम् ।
प्रव्रजेद्विधिवद्यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान् ॥
वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकं ।
व्याधिदिष्टोविरक्तो वा नातुरोवाथ दुःखितः ॥
आतुराणां विशेषोऽस्ति न विधिर्न च सत्क्रिया ।
प्रैषमात्रस्तु सन्न्यास आतुराणां विधीयते ॥
उत्पन्ने सङ्कटे घोरे चोर-व्याघ्रादिगोचरे ।

भयभीतस्य सन्न्यासं अङ्गिरा मुनिरब्रवीत् ॥
विरक्तः सन्न्यसेद्विद्वाननिष्ट्वापि द्विजोत्तमः ।
अथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयेत् ॥
तपस्तप्त्वा तपोयोगाद्विरक्तः सन्न्यसेत्तथा ।
प्रकर्त्तुमसमर्थोऽपि जुहोति यजतिक्रियाः ॥
अन्धः पङ्गुर्दरिद्रो वा विरक्तः सन्न्यसेत् द्विजः ।
सर्वेषामेव वैराग्यं जायते सर्ववस्तुषु ।
तदैव सन्न्यसेद्विद्वानन्यथा पतितो भवेत् ॥

यमः ।

चीर्णवेदव्रतो विद्वान् ब्राह्मणो मोक्षमाश्रयेत् ।
समः सर्वेषु भूतेषु कृतकृत्यः परिव्रजेत् ॥
पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत् ।
वनाद्वा धूतपापो वा परं पन्थानमाश्रयेत् ॥

कूर्मपुराणे ।

उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ।
यत् व्रजेत् ब्रह्मचर्य्यादीन् यदीच्छेत्परमां गतिं ॥
दारानाहृत्य विधिवदथवा विविधैर्मखैः ।
यजेदुत्पादयेत्पुत्रान् विरक्तो यदि सन्न्यसेत् ॥
अनिष्ट्वा विधिवद् यज्ञैरनुत्पाद्य तथात्मजं ।
न गार्हस्थ्यं गृहीत्वा तु सन्न्यसेत् बुद्धिमान् द्विजः ॥
अथ वैराग्यवेगेन स्थातुं नोत्सहते गृहे ।
तदैव सन्न्यसेद्विद्वाननिर्वेद्य विचारयेत् ॥

प्रथमाद्वाश्रमाद्वापि विरक्तो भवसागरात्।
आश्रमी मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत्॥
अथ तृतीयं सम्प्राप्य गृहस्थाश्रममुत्तमं।
चतुर्थमायुषोभागं तत्स्थो वापि परिव्रजेत्॥

इति चतुर्थाश्रमकालनिर्णयः।

---

## अथाग्निहोत्राधान-दारस्वीकारकालनिर्णयः।

तत्र मनु-शातातपौ।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥

स च सोदरो भ्राता नान्यजो नान्यमातृजः। एतदेवोत्तरत्र स्फुटीभविष्यति, तथा पतितोन्मत्त-नपुंसकान्ध-बधिर-मूक-जड़-कुब्ज-कुष्ठि-श्विति-राजयक्ष्मोदरायसाध्यमहारोगाभिभूत-नास्तिक-प्रव्रज्ययोगिप्रव्रजितचिरकालप्रोषितेषु एतेष्वदोष इत्यवगन्तव्यं। एतेषां परिणयादावधिकारस्याविद्यमानत्वात्।

अत एव छन्दोगपरिशिष्टे कात्यायनः।

देशान्तरस्थ-क्लीवैकवृषणांश्च सहोदरान्।
वेश्यातिसक्तांश्च पतित-शूद्रतुल्यातिरोगिणः॥
जड़-मूकान्ध-बधिर-कुब्ज-वामन-कुण्ठकान्।
अतिवृद्धानदारांश्च कृषिसक्तान् नृपस्य च॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा।
कुलटोन्मत्त-चोरांश्च परिविन्दन् न दुष्यति॥

शातातपः ।

क्लीबे देशान्तरस्थे वा पतिते प्रव्रजिते तथा[1] ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

सुमन्तुः ।

व्यसनासक्तचित्तो वा नास्तिको वाथ वाग्रजः ।
कनीयान् धर्मकामस्तु आधानमथ कारयेत् ॥
पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

यम-वाक्ययो ।

दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः ।

इति पाठः। 'परनारीसुतान्' दत्त-क्रीतकादिभ्रातॄन् ।

वशिष्ठः ।

अष्टौ दश-द्वादशवर्षाणि भ्रातरमनिविष्टमप्रतीक्षमाणः प्राय-श्चित्ती भवति,

अनिविष्टं मायोदरे, भवन्ति चात्र श्लोकाः ।

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः ।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥
उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा ।
राजयक्ष्मादियुक्तश्च न न्याय्यः स्यात् प्रतीक्षितुं ॥
षण्ढ-वामन-कुब्जान्ध-पतितोन्मत्त-कुण्डकान् ।

---

(१) पतिते प्रजिते तथेति पाठे नाक्षराधिक्यदोषो भवितुमर्हतीति विभावनीयं ।

रोगि-बधिर-मूकेषु न दोषः परिवेदने ॥

सुमन्तुः ।

ज्येष्ठोभ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।

अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

तथा बृहद्वसिष्ठः ।

अग्रजस्तु यदानग्निरादध्यादनुजः कथं ।

अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

एतच्चाधिकारिणि भ्रातरि अकुर्वति वेदितव्यं। अनधिकारिणि व्यतिक्रमाभावाच्च तदनुज्ञापनं युज्यते ।

अतएव हारीतः ।

सोदराणान्तु सर्वेषां परिवेत्ता कथं भवेत् ।

दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

अस्यार्थः। सोदरेऽग्रजेऽधिकारिणि अकृतविवाहे विवाहमीहमाने यस्मिंस्थितेऽवतिष्ठति तदनुज्ञां गृहीत्वाधानवद्विवाहो न कदाच- नापि कर्त्तव्यः।

यद्वाहोशनाः ।

पिता पितामहो यस्य नाग्रजोवाथ कश्चित् ।

तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥

सुमन्तुः ।

पितुर्यस्य तु नाधीतं कथं पुत्रस्तु कारयेत् ।

अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥

अथाप्यननुज्ञाते स्थिते वा शातातपः ।

अग्रजः परिविन्दन्ति कनिष्ठस्य या च कन्या विरूपिका ।

इत्यत्राधिकाररहिते भ्रातरीति पूर्ववचनादनिच्छया ज्येष्ठाऽपि सती न कनिष्ठाया विवाहविघ्नहेतुर्भवितु मर्हतीति ।

इत्यग्निहोत्राधान-दारसंस्कारकालनिर्णयः ।

---

## अथावसथ्याधानकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

आवसथ्यमनादृत्य ज्येष्ठानां यः प्रवर्त्तते ।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते ॥

अत्र मेधिराजः ।

दाराग्निहोत्रसंयोगं यः कुर्यादग्रजे स्थिते ।

इत्यग्निहोत्रशब्दोपादानादौपासनपरिग्रहेऽपि नैव परिवेदनं भवति शब्दप्रवृत्तेरन्यनिवृत्तिफलत्वादिति तदयुक्तं अन्यनिवृत्तेर-नाम्नानात् ।

अतएवाह गार्ग्यः ।

सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहं ।
आवसथ्यं तथाधानं पतितस्त्वन्यथा भवेत् ॥

मनुगर्भोऽपि ।

आधानाध्यापनेनैव अग्निष्टोमधनेन च ।
उपासनं समादद्यात् अकाले परिवेदनम् ॥

'अकाले' यथाविहितकाले ।

तथाच स्मृतिः ।

आधानं विधिवद्दैवमनुज्ञाद्यापि वा ।
महानयाहरयोर्वा दार-दायादकालयोः ॥

पारस्करः ।

आवसथ्याधानं दारकाले दायादकाले एकेषां ।

गौतमः ।

पुनस्तुत्पाद्यावसथ्याधानं ज्ञातिधीन् संपूजयेत् ।

व्यासः ।

अग्निर्वैवाहिको येन न गृहीतः प्रमादिना ।
पितर्युपरते तेन गृहीतव्यः प्रयत्नतः ॥
यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥

ज्येष्ठस्याधिकारित्व एतद्वचनं कनीयांस्तु ज्ञाग्निलोपेऽपि ज्येष्ठे भ्रातरि वेदाध्ययनाभावतो नैवाग्निपरिग्रहमकुर्वन्नपि प्रत्यवायेन न संयुज्यते ।

अत्र गर्गः ।

पित्र्यपाकोपजीवी वा भ्रातृपाकोपजीवकः ।
ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना ॥

अनधीतवेदस्यापि समावृत्तविवाहः सत्यव्रतेन दर्शितः ।

अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथा तथा ।
अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे ॥

इत्यावसथ्याधानकालनिर्णयः ।

## अथाग्निहोत्रकालः ।

तत्र कात्यायनः ।

उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥
रात्रेस्तु षोडशे भागे ग्रह-नक्षत्रभूषिते ।
कालं त्वनुदितं ज्ञात्वा होमं कुर्याद्विचक्षणः ॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले ।
रविर्यावन्न दृश्येत समयाध्युषितं च तत् ॥
रेखामात्रं प्रदृश्येत रश्मिभिश्च समन्वितः ।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत् ॥

मनुः ।

सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि ।

बौधायनः ।

आसायं कर्मणः प्रातराप्रातः सायकर्मणः ।
आहुतिर्नातिपद्येत पौर्वणं पार्वणान्तरात् ॥

बौधायनीयपरिशिष्टे ।

छन्दोग च प्राजापत्याः सायंस्थे अग्निहोत्रिणां पक्षान्ते समस्त-होमानयाश्च तथा हिरण्यीय-बह्वृचयो द्विमासार्द्धमासायाग्निहोत्र-मजुहवुस्त्वासायावेर आमयाव्यार्त्तवार्धमासायाग्निहोत्रं जुहुयात् उपवेद्येऽहनि प्रातःसायं चतुर्दश चतुर्दशहोतानि प्रातश्चतुर्दश[1] ।

---

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परमयं न समीचीन प्रति-भाति ।

चतुर्होमप्रचरणमुपलक्षणार्थं, कदाचित् पञ्चदशापि भवन्ति कदाचिच्चतुर्दशहीनानि कदाचित् षोड़शानि ।

मरीचिः ।

पञ्चहोमानथोद्दृत्य गत्वा कस्माच्चिवर्त्तते ।
होमं पुनः प्रकुर्वीत भवेच्च न स दोषभाक् ॥

इत्यग्निहोत्रकालनिर्णयः ।

---

## अथ प्रासादाद्यारम्भकालः ।

यथाकालं शुभं ज्ञात्वा तदा भवनमाचरेत् ।
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ॥
वैशाखे धन-रत्नानि ज्यैष्ठे मृत्युस्तथैव च ।
आषाढ़े भृत्य-रत्नानि पशुवर्गमवाप्नुयात् ॥
श्रावणे भृत्यलाभश्च हानिर्भाद्रपदे भवेत् ।
पत्नीनाशश्चाश्विने स्यात्कार्त्तिके धन-धान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतोभयम् ॥

'भक्तं' भक्ष्यमात्रोपलक्षणं ।

लाभश्च बहुशो विन्द्यादग्निं माघे विनिर्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालबलं स्मृतम् ॥

विश्वकर्ममते ।

चैत्रे शोकाकुलोभर्त्ता वैशाखे च धनान्वितः ।
ज्यैष्ठे गृही विपद्येत नश्यन्ति पशवः शुचौ ॥
श्रावणे धनवृद्धिः स्याद्भाद्रभे न वसेद्गृही ।

कलहश्चाश्विने मासि भृत्या नश्यन्ति कार्त्तिके ॥
मार्गशीर्षे धनप्राप्तिः सहस्ये कामसम्पदः ।

'सहस्यः' पौषः ।

माघे भवेदग्निभयं फाल्गुने श्रीरनुत्तमा ॥

तथा वसिष्ठे ।

व्याधिः शोकोभवेच्चैत्रे वैशाखे धनरत्नयुक् ।
गो-महिष्यादिभिर्युक्तो गृहमेधी सदैव हि ॥
ज्यैष्ठे मृत्युमवाप्नोति आषाढ़े पशुनाशनम् ।
भृत्यलाभः सुरत्नानि लाभोऽर्थस्य तथैव च ॥
श्रावणे भृत्यलाभस्तु धनवृद्धिरनाकुला ।
मासि भाद्रपदे गेहं दुःखदं जायते ध्रुवम् ॥
तत्र सर्वस्वहानिस्तु भवेत्तद्गृहमेधिनः ।
आश्विने तु भवेन्नित्यं पत्नीनाशस्तथा कलिः ॥
कार्त्तिके चातुलं धान्यं भृत्यनाशोऽप्यहर्निशम् ।
अत एव प्रशस्यन्ते प्रासादारम्भणे स्मृताः ॥
मार्गशीर्षे गृहारम्भो धनलाभसुखप्रदः ।
भक्ष्यं वै विविधं तत्र स्वर्णाद्यादिसुरत्नकम् ॥
वास्तुलाभः शुभश्चात्र प्रजालाभो महानपि ।
मित्राणां चैव पुत्राणां स्त्रीणां लाभः परोभवेत् ॥
पौषे भीतिः परिज्ञेया तस्कराणां सुदारुणा ।
धन-धान्यादिलाभः स्यात् पुत्र-मित्रादिसम्पदः ॥
माघे वह्निभयं ज्ञेयं सर्वसन्तापकष्टदा ।

फाल्गुने चैव विज्ञेयो लाभः काञ्चनजः शुभः॥
पुत्रलाभो महांश्च सुख-सौहृद्संयुतः।
इति मासफलं प्रोक्तं त्रैविध्यमधुना ब्रुवे।
उत्तमं मध्यमञ्चैव कनिष्ठञ्चेति तत् त्रिधा॥
वैशाखे श्रावणे चैव मार्गशीर्षे च फाल्गुने।
उत्तमास्ते समाख्याताः कथ्यन्ते मध्यमास्तथा।
आषाढ़े कार्त्तिके पुष्ये मध्यमाश्चेति कीर्त्तिताः॥
कनिष्ठांस्तान् समाख्यास्ये निशामय समासतः।
चैत्रो ज्यैष्ठो नभस्यः स्युरीषोमासाः कनिष्ठकाः॥

'ईषः' आश्विनः।

फलमेषां समासेन कथितं तत्परिस्फुटम्।

अपराजितपृच्छायाम्।

रवौ कन्या-तुलासंस्थे वास्तौ पूर्वं शिरः स्थितम्।

'अलिः' वृश्चिकः।

चापे च मकरे कुम्भे दक्षिणेन व्यवस्थितम्।
आदित्यवारयोगेन स वास्तुः चरति क्रमात्॥
यत्र भानुः शिरस्तत्र ज्ञातव्यं रविक्रमात्।
देवागारं मठश्चैव न कुर्याच्छीर्षसम्मुखम्॥
मृत्युरोगभयानि स्युः प्रशस्तं कुक्षिसम्मुखम्।
तुला-वृश्चिक-कन्यासु भास्करो यदि संस्थितः।
न तदा प्राङ्मुखं कुर्यात् मठं भवति निष्फलम्॥
धनुर्मकर-कुम्भेषु यदा तिष्ठति भास्करः।

तदा याम्यमुखं वेश्म राज-चौराग्निभीतिदम् ॥
मीने मेषे वृषे प्रत्यङ्मुखं स्त्रीकलहावहम् ।
मिथुने कर्कटे सिंहे न कुर्याच्चोत्तराननम् ।
तथा कृतं भवेद्वेश्म दोष-शोक-भयावहम् ॥

विश्वकर्मा ।

रवौ कन्या-तुलालिस्थे गृहं वारुणदिङ्मुखम् ।
न कुर्यात्तद्धि शून्यं स्यात्त च दृष्टो भवेत् प्रभो ॥
दक्षिणाभिमुखं कुम्भ-मृगचापस्थिते रवौ ।
कुर्वीत निष्फलं तस्मात् नृपदण्ड-वधादिकृत् ॥
न मीन-वृष-मेषस्थे कुर्वीत प्राङ्मुखं रवौ ।
तद्धनघ्नं वणिक्क्रुद्धराजचौरादिकृन्ततः ॥
रवौ मिथुन-सिंहस्थे न कर्कस्थेऽप्युदङ्मुखम् ।
कुर्यात्तद्धि दरिद्रत्वं दद्यात्स्त्र्यपदोषतान् ॥

विश्वकर्मप्रोक्ते ।

अधुना कुण्डलीचक्रं रविचक्रायुधं ध्रुवम् ।
रेखाद्वयं प्रकर्त्तव्यं तत्र वै पूर्वपश्चिमम् ॥
दक्षिणोत्तरगन्तव्यद्वैवैका वह्नि-वायुगा ।
ईश-नैरृतगा चैका तत्र राशींस्तु विन्यसेत् ॥
क्रमाद्वीशानरेखाया रेखाद्वादशकं भवेत् ।
तत्र कन्यादिसिंहान्ता राशयो द्वादश क्रमात् ॥
यत्र यत्र भवेद्भानुस्तत्र वास्तुशिरः स्थितम् ।
तत्स्थानात् सप्तमे राशौ वास्तोर्वृद्धिः पतेत् क्रमात् ॥

यद्रेखायां भवेत्सूर्यो वास्तुमस्तकसंयुतः ।
तद्रेखायपितं राशिं संमुखञ्चैव दूषयेत् ॥
रविदृष्टिगतं राशिं जानीयात्त्वभिधामितम् ।
रविभुक्तस्तु यो राशिः स च दग्धः प्रकीर्त्तितः ॥
शिरःस्थिते न कर्त्तव्यं रवौ द्वारं कथञ्चन ।
यद्यज्ञानात्कृते तस्मिन् क्षयं स्याद्गृहमेधिनः ॥
वास्तुदृष्टिस्थिते राशौ यद्द्वारन्तु वेश्मनः ।
धननाशो भवेत्तत्र पुत्र-मित्र-पशुक्षयः ॥
रविरेखापथे राशौ कृते रोगभयं महत् ।
रोग-चोरादिभिश्चैव वह्नि-राजकुलादिभिः ॥
रविदृष्टिगते राशौ गृहद्वारन्तु यत्र हि ।
तत्र संवसतो नित्यं रोग-दुःखं सुदारुणम् ॥
दग्धे द्वारे कृते शास्तुकर्त्तुः स्यात्कुलक्षयः ।
मकरस्थे कुम्भगे भानौ सिंहगे कर्कटे तथा ।
पूर्वास्यं पश्चिमास्यञ्च तदा गेहं प्रकारयेत् ॥
फलमेतत् समुद्दिष्टं वर्णानां भवनाश्रयम् ।
कन्यादौ नारभेद्गेहं मत्स्यार्यौ कदाचन ॥

कुण्डलीचक्रस्य फलितार्थमाह ।

फलोद्देशं प्रवक्ष्यामि प्रत्येकेन परिस्फुटम् ।
सुखवृद्धिस्तथा शान्तिः सर्वपापोपमर्दनम् ॥
बन्धुनाशस्तथा तस्मं नक्षत्रे फलमीदृशम् ।
भूरिसम्पत्तिश्चैव पांशुभिश्च यतो गृही ॥

एवमादि फलं ज्ञेयं कुम्भे वै सर्वराशिषु च ।
पुत्राः पौत्राः प्रवर्द्धन्ते लक्ष्मीरविचला भवेत् ॥
भर्त्ता च हस्तिमाप्नोति सुख-सौभाग्यसंयुतः ।
सिंहे त्वविकलं सर्वमेवमादि फलं भवेत् ॥
हृष्टः पुष्टः सुखस्यश्च बहुगावः श्रियान्वितः ।
भर्त्ता वै लभते सौख्यं कर्क्के च फलमीदृशम् ॥
मेषे वृषे तुलायाञ्च वृश्चिके च यदा रविः ।
उद्यापनं प्रकुर्व्वीत प्रोतहारं प्रकारयेत् ॥
एतेषान्तु क्रमेणैव फलमत्र वदाम्यहम् ।
शुभलक्ष्मीफलं सौख्यं पुत्र-पौत्रसमुद्भवे ॥
भ्रमुभागी भवेन्नूनं सर्वसौभाग्यसंयुतः ।
एवमादि फलं मेषे भर्त्ता वै लभते चिरम् ॥
वृषे सौख्यं चिरा लक्ष्मीः पशुवृद्धिरनाकुला ।
पुत्राश्च बहवस्तस्य जायन्ते शोभनाकृतिः ॥
एवमादि फलं भर्त्तुस्तत्र प्रोक्तं मनीषिभिः ।
तुलायां प्रोच्यते सम्यक् फलमिष्टतमं नृणाम् ॥
धनं धान्यं सुखं भोगो गोऽश्व-पुत्रसमुद्भवः ।
बहुमित्रास्तथा भृत्याः पशवः शोभना धने ॥
पुत्रदारात्रिसम्पत्ता भर्त्तुस्तत्रायामीदृशं फलम् ।
विपत्ताः शत्रुवः सम्यक् कलुषे हृद्धिरेव च ॥
धनवान् भोगसम्पन्नो भर्त्ता चारुत्वभाग्नितः ।
एवमादि फलं तत्र वृश्चिके जायते ध्रुवम् ॥

नक्र-कुम्भौ प्रतिज्ञेयौ प्रकाश्ये मन्दिरे स्थितौ ।
हरि-कर्कटकौ ज्ञेयौ प्रतीचीमुखवेश्मनः ॥

'हरिः' सिंहः ।

मेषोवृषस्तथा चैतौ सौम्यागारमुखे स्थितौ ।
तुला च वृश्चिकश्चैव दक्षिणस्यामुभौ स्थितौ ॥
कोणस्थानामथोवक्ष्ये कन्यादीनां फलं यथा ।
यतः कन्यास्थितोध्वाङ्क्षो धनुर्धूमसमाश्रयात् ॥
घ्रुणि मीन-चरे चैव मिथुनं सर्वदा स्थितम् ।
कन्यां प्राप्ते रवौ सम्यक् नारभेत गृहं सुधीः ॥
न चाद्भुतश्च जायेत पुत्र-पौत्रपशुक्षयः ।
सर्वदार्त्तियुतोभर्त्ता वसेदत्र न संशयः ॥
धनुस्थिते रवौ कार्यं नैव गेहं कदाचन ।
शत्रुभिर्घात्यते तत्र जायन्ते हि न सम्पदः ॥
अथवा राजदण्डेन पीड्यतेऽसौ वसन् गृही ।
यदा भानुस्तु मीनस्थस्तदा गेहं न कारयेत् ॥
हतश्चेद्व्याधिशोकाय भयाय विपुलाय च ।
अधीरत्वं तदा तत्र स्थानिः स्वामीगतः फलम् ॥
मिथुनस्थो यदा भानुस्तदा वेश्म न कारयेत् ।
अग्निना दह्यते तद्वै वेश्म दुःखप्रदं सदा ॥
मीनस्थे वह्निदिग्भागे गृहारम्भोऽग्निजीविनाम् ।
मिथुने नागवारम्भ ईशे सद्माविनां स्थितः ॥
चापस्थे कन्यका ज्ञेया गृहारम्भः सुखप्रदः ।

स्वरोपजीविनां चैव वेश्यादीनां सदैव हि ॥
नैर्ऋत्यां कार्मुके च स्यादारम्भः श्वपचां गृहे ।
इदानीं कथये वेश्म राशि-मासप्रमागमम् ॥
चैत्रे मेषो भवेद्यत्र तत्र गेहं न कारयेत् ।
कृते व्याधिर्महानत्र जायते गृहमेधिनाम् ।
ज्येष्ठे तु मिथुनं यत्र तत्र द्वैधं भवेत् सदा ॥
'द्वैधं' द्वन्द्वयुद्धमिति यावत् ।
आषाढे कर्कटो दुष्टो नभस्ये कन्यका तथा ।
आश्विने तु तुला दुष्टा वृश्चिकः कार्त्तिके तथा ॥
चापं मार्गे भवेद्दुष्टं तेन मार्गो न शोभनः ।
माघे कुम्भस्तु वै दुष्टस्तथारम्भो न शोभनः ॥
मासि मासाष्टकश्चेति दूषितं वै परस्परं ।
तेन चैषु न कर्त्तव्यं मन्दिरं शुभमिच्छता ॥
तथा ।
सिंहगं मेषगं चैव गुरुं यत्नेन वर्जयेत् ।
अस्तङ्गते गुरौ शुक्रे गृहारम्भो न शस्यते ।
नातिचीर्णे निशानाथे गृहारम्भो भवेदिह ॥
विष्णुधर्मोत्तरे ।
प्रावृट्काले न कर्त्तव्यं वास्तुकर्म विजानता ।
तपनः ।
कृष्णपक्षान्ते त्रिभागे कृष्णैकादश्यामारभ्य दिनपञ्चके शुक्लपक्षान्ते त्रिभागे शुक्लप्रतिपदमारभ्य दिनपञ्चके, एवं कृष्णैकादश्यामारभ्य दिनदशकं विविधं भवति ।

तथा ।

चतुर्थीं नवमीञ्चैव वर्जयेच्च चतुर्दशीम् ।

विश्वकर्ममते ।

तिथयो यत्र शस्यन्ते याः शुभा वास्तुकर्मणि ।
शस्ते मासि सिते पक्षे प्रतिपच्च द्वितीयया ॥
तृतीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।
एकादशी-त्रयोदश्यौ पूर्णमासी प्रकीर्त्तिता ॥
एताः पूर्णेति विख्याता नामतस्तिथयस्त्विमाः ।
चतुर्थ्यां वाथ षष्ठ्यां वा दक्षिणास्यं विवर्जयेत् ॥
तत्र संवसतो यस्मात्सदाव्याधिभयं भवेत् ।
तथा वाराः प्रशस्यन्ते रवि-मङ्गलवर्जिताः ॥
दिव्यान्तरीक्ष-क्षितिजैरुत्पातैर्भवपीड़ितम् ।
ग्रहोपसृष्टं सन्ध्याख्यं व्यतीपातहतञ्च यत् ॥

'ग्रहोपसृष्टं' पापग्रहदूषितम् ।

चन्द्र-ताराऽनुकूले भे कर्त्तुः कार्यं त्रिजागता ।
ध्रुवाणि तानि शस्तानि प्राक्रवर्णोर्ज्जितं तथा ॥

'ध्रुवाणि' रोहिण्युत्तरात्रयं चेति ।

वारुणं वैष्णवं पुष्यं पौष्णं सावित्रमेव च ।

मत्स्यपुराणे ।

वज्र-व्याघात-शूलेषु व्यतीपातातिगण्डयोः ।
विष्कुम्भ-गण्ड-परिघान् वज्रयोगेषु कारयेत् ॥

विश्वकर्ममते ।

अथ योगान् प्रवक्ष्यामि वर्जिता ये मनीषिभिः ।
अतिगण्डो व्यतीपातः परिघो वज्र एव च ॥
गण्डं शूलञ्च विष्कुम्भो व्याघातश्च सुदुःखदः ।
एतान् योगान् समावर्ज्य अभावे तेषु चैव हि ॥
विष्कुम्भे घटिकास्तिस्रः पञ्च वा वर्जयेद्बुधः ।
वज्रे तु घटिकास्तिस्रो नव वा परिवर्जयेत् ॥
अतिगण्डेषु वै षट्कं नव वा दोषदायकाः ।
गण्डे तु घटिकाः षष्ठा व्याघाते नव षट् च वा ॥
शूले तु घटिकाः पञ्च सप्त वा दोषदा मताः ।
वैधृतौ च व्यतीपाते घटिकाषष्टिरेव च ॥
परिघे घटिकास्त्रिंशत् षट्त्रिंशदथवा शुभाः ।
एतेषां घटिकाः शेषाः सर्वाश्चान्याः शुभावहाः ॥
योगाः शुभावहाः कार्य्या वास्तुस्थापनकर्मणि ।
यथा नाम तथा तेषां फलसिद्धिरुदाहृता ॥

तथा ।

करणान्यथ वक्ष्यामि यात्रारम्भे शुभाय वै ।
तैतिलं वणिजं नागं बालवं करणोत्तरम् ।
धन-धान्यकराणि स्युः श्रेयसे च सुखाय च ॥

विष्णुधर्मोत्तरे ।

भद्रारकाद्विनं नाम करणं विष्टिसंज्ञकम् ।

वर्जयेदित्यनुषङ्गः ।

मत्स्यपुराणे ।

श्रेते मैत्रेऽथ माहेन्द्रे गान्धर्वे सावित्रि विरोचने ।
तथा वैराजसावित्रे मुहूर्ते गृहमारभेत् ॥
चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम्
स्तम्भोच्छ्रायादि कर्त्तव्यमन्यच परिवर्जयेत् ।
प्रासादेऽप्येवमेव स्यात् कूप-वापीषु चैव हि ॥

विश्वकर्ममते ।

मुहूर्त्तान् कथयिष्यामि यैः कृतैः सर्वसम्पदः ।
माहेन्द्रे रौहिणे चैव साविचे मित्रके तथा ॥
गान्धर्वेऽभिजिति श्वेते मुहूर्त्ते कारयेत् गृहान् ।
अथ साधारणान् ब्रूमो मुहूर्त्तान् सप्त चैव हि ॥
विराजोविजयः श्वेतः साविचो मैत्रिकोऽभिजित् ।
सत्यश्चेति समाख्याताः सर्वे सर्वार्थसिद्धिदाः ॥
अथ वारविशेषेण वर्जनीयान् ब्रवीमि ते ।
अर्यम्णैर्क्के तु वैराज्यसन्द्रे वै प्रहुराक्षसौ ॥
पिचा श्रेयौ कुजे गहौ बुधे चैवाभिजित्तथा ।
पित्र्यब्राह्मौ तथा शुक्रे राक्षसाप्यौ बृहस्पतौ ।
भौजङ्गेयौ मुहूर्त्तौ तौ वर्जनीयौ शनैश्चरे ॥

विष्णुधर्मोत्तरे ।

स्थिरलग्ने स्थिरांशे च कर्त्तुश्चोपचयान्विते ।
'स्थिरलग्नानि' वृष-सिंह-वृश्चिक-कुम्भाः । 'कर्त्तुः' कर्त्तृराशेः, 'उपचयान्विते' त्रिषडेकादशस्थानस्थिते ।

तथाच मात्स्ये ।

चित्रजैकादशदशमान्युपचयभवनान्यतोऽन्यथान्यानि।

यस्य सौम्या ग्रहाः केन्द्रे त्रिकोणे चापि भार्गवः।

पापाश्चोपचयस्थाने तस्मिन् कार्य्यं निवेशनम्॥

वृहस्पति-शुक्र-बुध-चन्द्राः 'सौम्याः'। क्षीणेन्दु-रवि-मङ्गल-शनैश्चराः 'पापाः', संयुक्तो बुधश्च।

तथाच लघुजातके।

क्षीणेन्द्वर्क-यमाराः पापास्तैः संयुतः सौम्यः।

'यमः' शनैश्चरः, 'आरः' मङ्गलः, 'सौम्यः' बुधः इति। 'केन्द्राणि' लग्नानि प्रथम-चतुर्थ-सप्तम-दशमस्थानानि।'त्रिकोणं' नवपञ्चमस्थानं।

तथाच जातके।

केन्द्रचतुष्टयं कण्टकञ्च लग्नात् सप्तदशचतुर्थानां सञ्ज्ञयः इति,

नवपञ्चमं त्रिकोणं नवर्क्षत्रिकोणं चेति।

केन्द्रस्थं वर्जयेत्पापं सर्वयत्नेन कर्मसु।

केन्द्रसौम्ययुतं देवं न तु शून्यं कदाचन॥

विश्वकर्ममते।

अथ लग्नं प्रवक्ष्यामि गृहारम्भे शुभावहं।

वृषो धनुस्तुला-कन्या मिथुनं कलशस्तथा॥

लग्नान्येतानि शस्तानि गृह-प्रासादकर्मणि।

कृतमेतेषु लग्नेषु सर्वसिद्धी भवेदिह॥

एकादशे तृतीये च षष्ठे पापग्रहाः शुभाः।

पापग्रहेऽष्टमे चैव मरणं प्राप्यते ध्रुवं॥

चन्द्रार्कादिग्रहाः सर्वे लग्ने शुभदा गृहे।

नीचगा न च नीचस्था न च तीक्ष्णांशुदूषिताः ॥

सूर्यादिग्रहाणां स्वक्षेत्राणि, सूर्यस्य सिंहः क्षेत्रं, सोमस्य कर्कः, भौमस्य मेष-वृश्चिकौ, बुधस्य मिथुन-कन्ये, गुरोर्धनुर्मीनौ, शुक्रस्य वृष-तुले, शनैश्चरस्य मकर-कुम्भाविति।

तदुक्तं लघुजातके ।

कुज-शुक्र-बुधेन्द्वर्क-ज्ञ-शुक्र-जीव-कुज-सौरि-शनि-गुरवः भेशा इति।

एते क्रमेण मेषादीनां द्वादशानां राशीनां ईश्वरा इत्यर्थः ।

'कुजः' मङ्गलः, 'ज्ञः' बुधः, 'जीवः' गुरुः, 'सौरिः' शनैश्चरः, 'भानि' राशयः, इति ।

तथोच्चं नीचञ्च परिभाषितं जातके ।

अज-वृष-मृगाङ्गना-कर्क-मीन-वणिज्यांशाः कथिता अर्काद्युच्चाः दश अष्टाविंशति-तिथीन्द्रियत्रयविंशतिविंशतिरुच्चान्नीचं सप्तममिति।

अस्यार्थः मेषस्याद्या दशत्रिंशांशा रवेरुच्चं। वृषस्याद्यास्त्रयस्त्रिंशांशाः सोमस्योच्चं। मकराद्या अष्टाविंशतिस्त्रिंशांशा मङ्गलस्योच्चं। एवं कन्याद्याः पञ्चदशत्रिंशांशाः बुधस्योच्चं। कर्कटस्य पञ्च गुरोरुच्चं। मीनस्य सप्तविंशतिः शुक्रस्योच्चं । तुलाद्या विंशतिः शनेरुच्चं ।

एतत्सर्वं समालोच्य विबुध्य निपुणं सुधीः ।
आरभेत प्रयत्नेन वास्तुकर्म सुसिद्धिदं ॥

इति वास्तुप्रकरणं ।

---

## अथ प्रतिष्ठाकालनिर्णयः ।

तत्र सामान्यतः प्रतिष्ठाकालनिर्णयः ।

विष्णुधर्मोत्तरे ।

वज्र उवाच ।

कस्मिन् काले तु कर्त्तव्या प्रतिष्ठा भृगुनन्दन ।

मार्कण्डेय उवाच ।

शृणु कालं प्रवक्ष्यामि प्रतिष्ठाकरणे तव ।
यस्मिन् काले कृता सा स्यात् फलसिद्धिप्रदायनी ॥
धन-धान्यवती स्फीता वरदा च तदा भवेत् ।
दृढ़ा भवति विख्याता चित्रिवेश्मे गुरौ युते ॥
ऐन्द्रे तेजस्वती स्फीता भूतविग्रहकारिणी ।
तथाविधा तु सा स्फीता वद्रि दाहमवाप्नुयात् ॥
नित्याश्चर्ययुता त्वाष्ट्रे गन्धलोके तथैव च ।
आश्विने तथा नित्यं लोकानुग्रहकारिणी ॥
पित्र्ये विनाशमाप्नोति कर्त्तुश्च मरणावहा ।
सौम्ये सौम्या तथा कर्त्तुर्वरदा च तथा भवेत् ।
ऐन्द्राग्ने नाशमाप्नोति कर्त्तुः कृत्वा विनाशनं ॥
आश्विने श्रीमती भूत्वा तथा पुत्रमवाप्नुयात् ।
लोकाभिगम्या भाग्ये स्यात् कर्त्तुर्भाग्यवती भवेत् ॥
सद्धर्मेऽपि यदा कार्या प्रतिष्ठा मनुजोत्तम ।
यस्मिन् युगे तु यो नाथो यो यो देवः प्रकीर्त्तितः ।
धन धान्यवती स्फीता कर्त्तुः श्रेयोजयावहा ॥

प्रभवादिभिः पञ्चभिः संवत्सरैर्विष्ण्वादीनि युगानि द्वादश तत्रैवाभिहितानि ।

संवत्सराख्यवर्षेषु नित्यमायुर्युता भवेत् ।
परिपूर्वे तु भूतघ्नी लोकख्याता तथैव च ॥
इदापूर्वे तथा सौम्या वरदा लोकसुन्दरी ।
अनुपूर्वे तु वरदा धन-धान्यवती भवेत् ॥
इत्पूर्वे नाशमाप्नोति कर्तुर्नाशप्रदा भवेत् ।
तथापि प्रभोर्नृत्यस्य समये रोषिता भवेत् ॥

प्रभवादयः पञ्च क्रमेण संवत्सर-परिवत्सरेदावत्सरानुवत्सरेद्वत्सर-संज्ञकाः एवमङ्गिरादिपञ्चकञ्च क्रमेण संज्ञापञ्चकमेवमुत्तरत्रापीति तथैवाभिहितं ।

मत्स्यपुराणे ।

प्राप्य शुक्लं शुभं पक्षमतीते चोत्तरायणे ।

विष्णुधर्मोत्तरे ।

उत्तरे त्वयने सौम्या धनवृद्धिकरी भवेत् ।
तथापि सुप्ते देवेशे सर्वानर्थविवर्द्धिनी ॥
शिशिरे लोककान्ता या दृढा च वसुधाधिप ।
सञ्जीता वसन्ते सौम्या च वरदा च तथा भवेत् ॥
ग्रीष्मे तेजस्विनी कान्ता भूतनिग्रहकारिणी ।
प्रावृट्काले तथा नाशं कर्त्ता सद्य समाप्नुयात् ॥

प्रावृट्कालनिषेधस्य शिवप्रतिष्ठाव्यतिरिक्तविषयः, शिवप्रतिष्ठायां तद्विधेः शिवप्रतिष्ठाकालनिर्णये दर्शितत्वात् ।

शरत्काले कृता नाशं शीघ्रमेव प्रपद्यते ।
हेमन्ते च यदा सौम्या धर्मवृद्धिकरी भवेत् ॥

माघे कर्त्तुर्विनाशाय फाल्गुने सुभगा भवेत् ।
शोकानन्दकरी चैत्रे वैशाखे वरसंयुता ॥
आशायुता सदा ज्यैष्ठे आषाढ़े धर्मवर्द्धिदा ।
श्रावणे धनहीना स्यात् प्रौष्ठपादे विनश्यति ॥
आश्विने नाशमाप्नोति वर्द्धिता कार्त्तिके तथा ।
सौम्ये सौभाग्यमतुलं पौषे पुष्टिरनुत्तमा ॥
दोषावहा तु माघे स्यात् कर्त्तुरात्मन एव च ।
चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

अथ माघमासनिषेधो विष्णुप्रतिष्ठाविषयः, विधिस्तु तद्व्यतिरिक्तदेवताप्रतिष्ठाविषयः, मार्गशीर्षमासविधिश्च विष्णुप्रतिष्ठाव्यतिरिक्तविषयः मार्गशीर्षमासनिषेधस्य विष्णुप्रतिष्ठाकालनिर्णये दर्शितत्वात् । श्रावणाश्विनमासनिषेधस्य विष्णुप्रतिष्ठाव्यतिरिक्तविषयः विष्णुप्रतिष्ठायामेतद्वयविधेस्तत्रैव दर्शितत्वात् ।

अपरे त्वाहुः "माघमासे सर्वदेवानामितिवचनात् विष्णुप्रतिष्ठापि तत्र कार्य्या माघमासादिनिषेधस्तु तत्तद्व्यन्यविषयतत्प्रतिष्ठाविषयविशेषे ।

द्वितीये मध्यफलदा तृतीये च शुभप्रदा ।
धन-धान्यवती ख्याता वरदा च तथा भवेत् ।
यस्य पक्षस्य वृद्धिः स्यात् तस्मिन् शुभफलप्रदा[१] ॥
द्वितीयायां धनोपेता तृतीयायां वरप्रदा ।

(१) शुभफला भवेदिति ख० ।

चतुर्थ्यां नाशमाप्नोति यमस्य चात्मजावधा ॥
विनायकस्य देवस्य तथा तच हितप्रदा ।
पञ्चम्यां श्रीयुता कर्तुर्वरदा च तथा भवेत् ॥
षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां रोगनाशिनी ।
अष्टम्यां धान्यसङ्कला नवम्यां तु विनश्यति ॥
भद्रकाख्याः कृता तच कर्तुर्भवति पुष्टिदा ।
धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा कृता ॥
एकादश्यां तथा पुण्य द्वादश्यां सर्वकामदा ।
त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति ॥
कृष्णपक्षे पञ्चदश्यां कर्तुः क्षयकरी भवेत् ।
पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत् ॥
वृश्चस्पृष्टा च विज्ञेया तथा दोषवती नृप ।
दिव्यन्तरीक्षे भूमौ च उत्पातेन तु या युता ॥
कर्तुर्व्याधिप्रदा तच प्रतिष्ठा तु क्रिया भवेत् ।
तिथिहानौ क्षयोज्ञेयो वृद्धौ वृद्धिः प्रकीर्त्तिता ॥

मत्स्यपुराणे ।

पञ्चमी च द्वितीया च तृतीया चाष्टमी तथा ।
दशमी पौर्णमासी च कृता तु फलदा भवेत् ॥

लक्षणसमुच्चये ।

ताश्च पक्षे सिते कार्य्या द्वितीया वै तिथिश्च या ।
द्वितीयायुर्मतिं दद्यात्तृतीया पुत्रसम्पदम् ॥
पञ्चमी च श्रियं नित्यं सप्तमी रोगनाशनम् ।

दशमी अमितद्धिश्च सौभाग्यञ्च त्रयोदशी ॥
नानाविधं धनं नूनं पौर्णमासी तिथिः सदा ।
एकविंशकरैर्नन्दा भद्रा पञ्चविंशाङ्गुभिः ॥
जया हि रामाश्विकामैः रिक्ता वेद-षडेन्द्रियैः ।
बाण-दिक्तिथिभिः पूर्णा हीनतुल्या हिता क्रमात् ॥
एते शुक्लेऽनुलोमाः स्युः कृष्णे च विलोमतः ।
रूपसन्ततिर्दयं चायुर्धीजय-धनानि च ॥
वर्षे त्वर्कः शुभः शुक्लचन्द्रः शान्तिप्ररोहणे ।
कर्कोत्सवतुलाचार्य्यमौर्विंदयामधुस्मवे ॥
मन्दे घटाविलेपन्ता निर्दिष्टानां प्रधाना ।
षड्दचतुराराणामायद्वराश्मिक्रमेण तु ॥

विष्णुधर्म्मोत्तरे ।

तेजस्विनी सूर्य्यदिने चन्द्रे चेमावहा भवेत् ।
भौमेऽग्निना प्रदग्धेन बुधेन धनदा भवेत् ॥
गुरावपि स्वाद्दृष्टे नित्यं लोकानन्दकरी स्थिते ।
चापञ्चार्कस्थिता सौरे प्रतिष्ठा वसुदायता ॥

मत्स्यपुराणे ।

बुधो बृहस्पतिः शुक्रस्त्रयोवाराः शुभावहाः ।
एभिर्निरीक्षितं लग्नं नक्षत्रञ्च प्रशस्यते ॥

वसिष्ठवचने ।

प्रीतिः सौभाग्यमायुष्मान् सुकर्म्मा शोभनो धृतिः ।
वृद्धिः सिद्धिः शुभः साध्योवरीयाञ्छिव-शुक्लकौ ।

ब्रह्मेन्द्रौ च शिवं चेति योगाः तत्संज्ञकाः शुभाः ॥
बवश्च बालवश्चैव कौलवं तैतिलं तथा ।
गरश्च वणिजश्चैव शकुनिश्च चतुष्पदं ।
नागं किन्तुघ्नमप्याहु विष्टिहीनन्तु पञ्चयोः ॥

विष्णुधर्मोत्तरे ।

शकुनौ दोषजननी चतुष्पदे भयावहा ।
नागे भवति सौम्या च किन्तुघ्ने च शुभप्रदा ॥
कौलवे वरदा ज्ञेया तैतिले रोगनाशिनी ।
गराख्ये रोगजननी तथा वणिजि पुष्टिदा ।
विष्टौ मरणदा कर्तुरात्मदोषवती तथा ॥

मात्स्ये ।

आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ।
ज्येष्ठा-श्रवण-रोहिण्यः पूर्वाभाद्रपदा तथा ॥
हस्तोऽश्विनी रेवती च पुष्ये मृगशिरस्तथा ।
अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ॥

ज्योतिषसमुच्चये ।

पुष्यशक्रोहिणीकाश्लेषा मघाढोत्तरा द्विजे ।
पुनर्वस्वनुराधास्तु चित्रा ज्येष्ठा महीभुजि ॥
धनिष्ठा श्रवणौ वैश्ये युगे भाद्रपदे तथा ।
अश्विनी रेवती शूद्रे स्वाति-फाल्गुनिकाद्वयं ॥
चतुर्वर्णमथा ज्येष्ठा मूलार्द्रा भरणी मघा ।
एतानि प्रतिलोमानां चाण्डालान्त्यजे तथा ॥

अथ-रोगकराश्विन्यो रोहिणी भयवृद्धिदा ।
हस्तः सिद्धिप्रदो नित्यं आयुर्दाषाढयुग्मके ॥
पुनर्वसुः सुखं दद्यादनुराधा तु सम्पदः ।
चित्रा सर्वसुखं नित्यं ज्येष्ठा रोगविनाशकृत् ॥
धनिष्ठारिजयं दद्यात् ज्ञानदः श्रवणः सदा ।
युग्मभाद्रपदा वृद्धिंपञ्चमिषापि चाश्विनी ॥
रेवती पुष्टिदा नित्यं स्वाती कुर्य्याद्धनं बहु ।
फाल्गुनीद्वितयं वृद्धिर्भरणी रिपुभेदनम् ॥
आर्द्रा सौभाग्यसम्पत्तिर्मूलेऽथ नृपसत्क्रिया ।
मृगः शान्तिप्रदो नित्यं धन्या शतभिषं त्यजेत् ।
मघेषा कृत्तिका चैव विशाखा च शुभप्रदा ॥

विष्णुधर्मोत्तरे ।

तेजस्विनी कृत्तिका च भूतनिग्रहकारिणी ।
किञ्चिद्भूला ततः काले न तदन्वितवह्निना ॥
यद्धैः सूर्य्यस्य सोमस्य कुमारस्य च या वरा ।
गङ्गायाश्च कृताश्चैव न दहन्ति च वह्निना ॥
प्राजापत्ये स्त्री नित्यं लोकानुग्रहकारिणी ।
सौम्ये तु वरदा प्रोक्ता मूषकेषु विनश्यति ॥
आर्द्रायां कर्दमरणं क्षिप्रमेव प्रयच्छति ।
पुनर्वसौ विनाशस्य संस्कारस्याप्नुयात्पुनः ॥
पुष्टिं पुष्ये समाप्नोति धनेन यशसा तथा ।
आपि सार्पे विनाशाय नागानां नाशकृद्भवेत् ॥

पित्रोर्मरणदा कर्तुस्तथा नाशञ्च गच्छति ।
शोकगम्या भवेद्भाग्ये कर्तुर्नाशवशा तथा ॥
तथापि कामदेवस्य कर्तुः सौख्यवशा तथा ।
अर्यम्णे सुदृशा ख्याता लोकानुग्रहकारिणी ॥
आयुर्दा च कृता हस्ते चित्रायां नाशमाप्नुयात् ।
नित्यैश्वर्ययुता लोके चित्रायाञ्च हितप्रदा ॥
स्वातौ तु वरदा सौम्या लोकानुग्रहकारिणी ।
ऐन्द्राग्ने कर्त्तृनाशाय मैत्रे मित्रविवृद्धये ॥
ज्येष्ठायां तेजसा युक्ता धन-धान्यवती भवेत् ।
तथाविधा तथा मूले किन्तु भूतसमाश्रया ॥
आषे क्लेदमवाप्नोति वैश्वदेवे सुखप्रदा ।
श्रवणे धन-धान्याढ्या वासवे वसुसंयुता ॥
वारुणे शीघ्रनाशाय तथाप्ये मनुजोत्तम ।
अहिर्बुध्ने कृता ख्याता कर्तुः सौख्यप्रदायिनी ॥
धन-धान्ययुता पौष्णे आश्विने योगनाशिनी ।
याम्ये मरणदा कर्तुरात्मनाशकरी तथा ॥
सार्के स्याच्छोकजननी सशौरे मृत्युदायिनी ।
सभौमे वह्निभयदा सतमस्के स्थिरा न तु ॥
केतुना धूमिते चक्षे वह्निदाहमवाप्नुयात् ।
केतूदये भवेद्येन तेन दुर्भिक्षमाप्नुयात् ॥
भौमोदये भवेद्येन तेन दह्येत वह्निना ।
शौरोदये भवेद्येन तेन कर्त्ता विनश्यति ॥

नक्षत्रे सपरीवेषे परचक्रभयं भवेत्।
उल्काहते विनाशाय सभूकम्पभयप्रदा॥
उल्कापातो भवेद्यत्र तत्र व्याधिकरी भवेत्।
त्रिविधोत्पातयुक्ते भे न शुभा परिकीर्त्तिता॥
दिव्यकीर्त्तिविनाशाय भौमे चात्मविनाशिनी।
अन्तरीक्षे च विज्ञेया शोकनाशकरी तथा॥
सर्वेष्टत-व्यतीपातयुक्तमेकं विवर्जयेत्।
शेषैर्दोषैस्तथायुक्ता यावदागमनाद्रवेः॥
जन्मनक्षत्रविहिता कर्त्तुः श्रेयस्करी भवेत्।
सम्पत्करी द्वितीये स्यात्तृतीयेऽरिभयप्रदा॥
क्षेम्या चतुर्थे भवति पञ्चमे व्याधिवर्द्धिनी।
कार्य्यवृद्धिकरी षष्ठे सप्तमे निधनप्रदा॥
अष्टमे वरदा सौम्या नवमे श्रीविवर्द्धिनी।
कर्मणां साधिका प्रोक्ता जन्माद्दशमे शुभा॥
एकादशे शुभकरी द्वादशेऽरिभयप्रदा।
ज्ञेया त्रयोदशे क्षेम्या रोगदा च चतुर्दशे॥
वृद्धिदा पञ्चदशके षोडशे निधनप्रदा।
सप्तदशे भूतिकरी नन्दा(१) चाष्टादशे भवेत्॥
एकोनविंशतितमे कर्त्तुर्मरणदायिनी।
तथा द्वितीये धनदा तृतीयेऽरिभयप्रदा॥
चतुर्थे क्षेमजननी पञ्चमे रोगवर्द्धिनी।

(१) नन्दयतीति नन्दा सुखदेति यावत्।

षष्ठे अशोकरी ज्ञेया धन-धान्यविवर्द्धिनी ॥
द्वितीये च चतुर्थे च पञ्चमे च तथाष्टमे ।
द्वादशे नवमे चन्द्रे कर्त्तुर्दोषवती भवेत् ॥
जन्मस्थश्च तृतीयश्च षष्ठश्चैकादशस्तथा ।
दशमः सप्तमश्चैव यदा विद्धो भवेद्ग्रहैः ॥
पञ्चमैर्नवमैश्चैव द्वादशैर्वा तथाष्टमैः ।
चतुर्थे वा तृतीये वा क्रमात्पापात्फलं लभेत् ॥
विपर्य्ययेण वेधश्चेत्पापोऽपि शुभकृत्स्मृतः ।
चन्द्राद्द्वादशगे सूर्य्ये द्वितीये वा भयप्रदा ॥
द्वादशे वा द्वितीये वा भौमे दाहमवाप्नुयात् ।
द्वादशे वा द्वितीये वा सौरे मरणदा भवेत् ॥
पापमध्यगते चन्द्रे ध्रुवं मरणदा भवेत् ।
एकस्मिंश्च यदा केन्द्रे चन्द्रमाश्च व्यवस्थितः ॥
केन्द्रपंचमधान्यस्थायुक्तं सूर्य्यारसूर्य्यजैः ।
तदा कर्त्तुर्विनाशाय प्रतिष्ठा स्यान्नराधिप ॥
चन्द्रे सार्के विनाशाय भौमे दाहमवाप्नुयात् ।
सशौरे मृत्युदा ज्ञेया खरादौ निधनप्रदा ॥
ग्रहणे चोपरागे तु कर्त्तुर्मरणदायिनी ।
परिव्यहे(१)तथा चन्द्रे तथा ज्येष्ठान्त्यपादगे ।
पौष्णान्त्यपादगे चैव कर्त्तुर्निधनकारिणी ॥

---

(१) पाठोऽयं आदर्शपुस्तक एव सन्निवेशितः परन्त्वयं न समीचीनो विभाति, परिघके त्वयं पाठो भवितुमर्हति ।

ज्योतिषसमुच्चये ।

शस्तोजीवो नव-द्वीषु-सप्तस्थानेषु सर्वदा ।
बुधः षष्ठाष्ट-तुर्य्येषु दिक्सप्त-नवराशितः ॥
सप्त-त्रि-षष्ठ दशमः शशी शुभफलप्रदः ।
रविर्दश-त्रिषट्संस्थो राहुस्त्रि-दशषष्ठगः ॥
त्रि-षट्स्थानगताः शस्ता मन्दाङ्गारक-केतवः ।
शुभाः क्रूराः सपापाश्च सर्वे एकादशास्तथा ॥
एषां दृष्टिर्मुनौ पूर्णा वार्द्धिकी षष्ठ-भूतयोः ।
पादिकी रामदिक्स्थाने वक्त्रब्ध्योः पादवर्जिता ॥
द्वितीया सम्पदाख्या तु चतुर्थी क्षेमसंज्ञका ।
षष्ठी च साधिका तारा ह्यष्टमी शत्रुनाशिका ।
नवमी चातिमित्रा स्यादेताः पञ्च फलप्रदाः ॥

विष्णुधर्मोत्तरे ।

जन्मराश्युदयेकर्तुः क्षिप्रं नाशकरी भवेत् ।
द्वितीये धननाशाय तृतीये कर्मसिद्धिदा ॥
चतुर्थे स्वजनाशाय पञ्चमे व्याधिदा भवेत् ।
षष्ठे शत्रुविनाशाय सप्तमे धननाशिनी ॥
अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशिनी ।
दशमे कर्मणां वृद्धौ लाभे लाभकरी भवेत् ॥
द्वादशे तु व्ययाय स्यात् प्रतिष्ठा तु तथा कृता ।
जन्मलग्नोदये श्रेष्ठा धन-धान्यवती भवेत् ॥
जन्मराशिफलं शेषं सर्वस्थानेषु निर्दिशेत् ।

मेषोदये कृता क्षिप्रं नाशमाप्नोति पार्थिव ॥
वृषोदये स्थिरा प्रोक्ता धन-धान्यवती भवेत् ।
शोककान्ता च मिथुने मङ्गलकल्याणकारिणी ॥
कुलीरे क्षिप्रं नाशः स्यात् सिंहे च सुदृढा भवेत् ।
कन्यायां शोककान्ता स्यात्तुलायां भवति स्थिरा ॥
वृश्चिके तु स्थिरा प्रोक्ता कल्याणाय धनुर्धरे ।
मकरे क्षिप्रं नाशः स्यात् कुम्भे लग्ने दृढा भवेत् ॥
मीने गुणवती कर्त्तुः कल्ये[१] शून्या तथा भवेत् ।
उग्रा स्यात् सूर्यदाभार्या[२] सौम्या सौम्यस्य कीर्त्तिता ॥
पापपक्षस्य केन्द्रेण कर्त्तुर्नाशाय कीर्त्तिता ।
सौम्या पटस्य सुशुभं कर्त्तुर्भवति वृद्धिदा ॥
फलं यदेव लग्नेषु नवांशेषु तदेव तु ।
द्वादशांशेषु विज्ञेयं तदेव मनुजोत्तम ॥
कर्त्तुर्नाशाय विज्ञेया त्रिंशांशे सोम-सूर्ययोः ।
शतं जीवेत् प्रपौत्राणां[३] कर्त्तुः कल्याणदा भवेत् ॥
शुभमंशं महाराज लग्नं पापफले शुभं ।
लग्ने शुभतरे प्राप्ते पापमंशमशोधनं ॥
लग्नस्थे शोकदा कर्त्तुः कृता भवति भास्करे ।

---

(१) लग्नविशेषे इत्यर्थः ।
(२) सूर्यदाभार्येत्ययं पाठः आदर्शपुस्तकेष्वेकरूप एव वर्त्तते परन्त्वयं न समीचीनो विभाति ।
(३) प्रपौत्राणां शतं जीवेदित्यन्वयः ।

द्वितीयेऽर्थस्य हानिः स्यात् तृतीये धनसंयुता ॥
आयुःक्षयश्चतुर्थे स्यात् पञ्चमे सुतनाशनं ।
षष्ठे शत्रुविघातश्च दारिद्र्यं सप्तमे भवेत् ॥
मरणं चाष्टमे मासि नवमे धर्मपीडनं ।
दशमे सुतवृद्धिश्च लाभे लाभयुता भवेत् ॥
द्वादशे व्ययसंयुक्ता निर्धना तु तथा भवेत् ।
चन्द्रे लग्नगते ज्ञेया सुदृढा मनुजोत्तम ॥
धनान्विता द्वितीये तु तृतीये लाभसंयुता ।
चतुर्थे बान्धवहिता पञ्चमे सुतवृद्धिदा ॥
षष्ठे रिपुविनाशाय सप्तमे च धनावहा ।
अष्टमे मरणायोक्ता नवमे धर्मपीडनं ॥
दशमे धर्मदा प्रोक्ता लाभे लाभप्रदा भवेत् ।
व्यये व्ययवती राजंस्तथा धनविवर्जिता ॥
अर्द्धबिम्बाधिके चन्द्रे शुभपक्षफलं भवेत् ।
अर्द्धबिम्बाधिके क्षीणे क्रमाद्य निबोध मे ॥
चन्द्रे लग्नगते ज्ञेया क्षिप्रं नाशो महीभुजां ।
द्वितीये च दरिद्रा स्यात् तृतीये धनसंयुता ॥
बहुधान्यं चतुर्थे स्यात् पुत्रनाशाय पञ्चमे ।
षष्ठे रिपुविनाशाय भार्यानाशाय सप्तमे ॥
अष्टमे मरणायोक्ता नवमे धर्मघातिनी ।
धनान्विता स्याद्दशमे लाभे लाभवती भवेत् ॥
व्यये व्ययवती नित्यं दरिद्रा च तथा भवेत् ।

लग्ने मृत्युकरा भौमे तथा दारिद्र्यदा धने ॥
कीर्त्तिं त्रिभुवने शुभ्रां तृतीयस्थः करोत्यसौ ।
चतुर्थे बन्धुनाशः स्यात् सुतनाशस्तथा सुते ॥
अरिनाशस्तथा षष्ठे सप्तमेऽसौ विनश्यति ।
अष्टमे कर्त्तमरणं नवमे दृश्यच्युतिः ॥
दशमे कर्मसिद्धिः स्यात् लाभे लाभवती भवेत् ।
आयात्मजप्रणस्तथो व्यये शुभ्यंयदाः सदा ॥
बुधलग्ने धनयुता द्वितीये च तथा भवेत् ।
तृतीये वरदा प्रोक्ता चतुर्थे धनसंयुता ॥
कीर्त्तिश्च पञ्चमे ज्ञेया षष्ठे रिपुविनाशिनी ।
सुखदा सप्तमे ज्ञेया हर्षदा च तथाष्टमे ॥
सौख्यदा नवमे राजन् दशमे कर्मवृद्धिदा ।
स्थिरलाभगते ज्ञेया व्ययगे धनसंयुता ॥
जीवे धनाढ्या लग्नस्थे द्वितीये च तथा भवेत् ।
बुद्धास्पदा तृतीये स्यात् चतुर्थे धनसंयुता ॥
पञ्चमे सुतदा प्रोक्ता षष्ठे शत्रुविनाशिनी ।
सप्तमे राज्यदा कर्तुरष्टमे च सम्वृद्धिदा ॥
कीर्त्तिदा नवमे ज्ञेया दशमेऽसम्वृद्धिदा ।
लाभस्थे लाभदा ज्ञेया व्यये लाभसमन्विता ॥
लग्नस्थे नित्यशा शुक्रे सर्वकामप्रदा भवेत् ।
धनगे च धनं दद्यात् तृतीये भ्रातृवर्द्धिनी ॥
चतुर्थे सुभगा ज्ञेया पञ्चमे सुतवृद्धिदा ।

षष्ठे पूज्या तथा शुक्रे सप्तमे धनवृद्धिदा ।
अष्टमे सुखदा प्रोक्ता नवमे च सुखार्थदा(१) ॥
दशमे शोककान्ता स्यादरिनाशस्तथायगे ।
तथा व्ययस्थे विज्ञेया सद्वये सधना तथा ॥
मृत्युदा लग्नगे सौरे दरिद्रा स्याद्द्वितीयगे ।
तृतीये धनलाभाय चतुर्थे कार्यमृत्युदा ॥
सुतगे सुतनाशः स्यादरिनाशस्तथारिगे ।
जायानाशस्तु जायास्थे मृत्युर्मृत्युपदोपगे ॥
धर्मगे धर्महानिः स्यात् कर्महानिस्तु कर्मगे ।
महालाभस्तु लाभस्थे व्ययगे च व्ययो भवेत् ॥
शून्यं विवर्जयेत् केन्द्रे तत्तथैव नियोजयेत् ।
एवं ज्ञात्वा शुभं कालं प्रयत्नेन सुदैववित् ।
कुर्यात् प्रतिष्ठां यत्नेन श्रद्धीयादवधानतः ॥
शुभेऽह्नि पूर्वं यचस्तां तत्कालप्रतिमाञ्च यां ।
समालपीठिकां गर्त्ते स्थापितां विनिवेशयेत् ।
तत्कालमेवं कुर्वीत नामावाप्तां समाहितः ॥

लक्षणसमुच्चये ।

पादादूनचतुर्नाडीभागः स्यान्मीन-मेषयोः ।
वृष-कुम्भौ च सुखानौ चतस्रः पादवर्जिताः ॥
मकरे मिथुने चैव चापालि-हरि-कर्कटाः ।

---

(१) सुखप्रदेति ख० ।

पादोना: पट्सला: कन्ये घटिका: सार्द्धपञ्च तु ॥
केसरी च वृषः कुम्भः स्थिराः स्युः सिद्धिदायकाः ।
चरं धनुस्तुला-मेषाद्द्रीयुग्मं मीन-कन्यके ।
कर्कटे कर्कटाश्चिद्र प्रवर्ज्याः कार्यनाशकाः ॥
स्थिरः शुभग्रहैर्दृष्टः प्रशस्तलग्नः शुभान्वितः ।
गुरु-शुक्र-बुधैर्युक्ते लग्ने दद्यादूनायुषी ॥
राज्यं सौख्यं बलं पुंसां देशधर्मादिकं बहु ।
प्रथमः सप्तमश्चतुर्थो दशमः केन्द्र उच्यते ।
गुरु-शुक्र-बुधास्तत्र सर्वसिद्धिप्रदायकाः ॥
त्र्येकादश-चतुर्थस्था लग्नात् पापाः शुभप्रदाः ।
अतोऽन्येऽनिष्टकर्मार्थं योज्यास्त्रिष्याद्यो बुधैः ॥
सुयोगे शाश्वता धर्माः स्थिरायां पुष्टि-जीवितं ।
सुलग्ने च महाभागो विषुवे चेप्सितं फलं ॥
षडशीतिमुखे पुण्ये अयने च महातिथौ ।
ऋद्धिरारोग्यमैश्वर्यं देवस्थापनतो भवेत् ॥
सन्ध्यागते तु लग्ने च प्रत्यस्तमितदुर्ग्रहे ।
दुष्टग्रहे दुष्टलग्ने नक्षत्रेऽशुभसंयुते ॥
दुर्निमित्ते तथोत्पाते चन्द्र-सूर्योपमर्द्दने ।
एतेषु स्थापिता देवाः भय-दुर्भिक्ष-रोगदाः ।
तस्माद्दिनं निरीक्ष्यादौ सर्वोपस्करमाहरेत् ॥

मत्स्यपुराणे ।

ग्रह-तारावलं बुद्ध्वा ग्रहपूजां विधाय च ।

निमित्तं प्रसुप्तं त्यक्त्वा वर्जयित्वा बुधादिकं ॥
शुभकाले शुभस्थाने क्रूरग्रहविवर्जिते ।
लग्ने चन्द्रे च कुर्वीत प्रतिष्ठादिकमुत्तमं ॥
अयने विषुवे तद्वत् षडशीतिमुखे तथा ।
एतेषु स्थापनं कुर्य्याद्विधिदृष्टेन कर्म्मणा ॥

विष्णुधर्म्मोत्तरे ।

यस्मिन् ऋक्षे यद्देवोक्तं फलं भूपतिसत्तम ।
तद्देवेह फलं प्रोक्तं तन्मुहूर्त्तेऽपि यादव ॥
रौद्रः सार्पस्तथा मैत्रः पैत्रोवासव एव च ।
आप्यो वैश्वस्तथा ब्राह्मः कौबेरः शक्रदेवतः ॥
ऐन्द्राग्नेयोनैर्ऋतश्च वारुणश्च महीपते ।
आर्य्यमणस्तथाभाग्यो मुहूर्त्तास्तु दिवाकरः ॥
रौद्रोऽजपादहिर्बुध्नः पौष्ण आश्विन एव च ।
याम्योऽग्निदेवतश्चैव ब्राह्मः सौम्यस्तथैव च ॥
आदित्यो जीवदैवत्यो वैष्णवः सूर्य्यदेवतः ।
त्वाष्ट्रश्चैवाथ याम्यश्च मुहूर्त्ता रात्रिचारिणः ॥

तथा ।

दिनमध्यगते सूर्य्ये मुहूर्त्तेऽभिजिदष्टमे ।
सर्व्वकामप्रदः स्यात् सर्व्वोपद्रववर्जितः ॥

मत्स्यपुराणे ।

प्राजापत्ये तु शयनं ब्राह्मे चोत्थापनं भवेत् ।
मुहूर्त्ते स्थापनं कुर्य्यात् तेन ब्राह्मे विचक्षणः ॥

विष्णुधर्म्मोत्तरे ।

गुरावस्तमयं प्राप्ते नीचस्थे कर्त्तृघातिनी ।
तस्मादुच्चस्थे जीवे तु धन-धान्यकरी भवेत् ॥
ब्राह्मे रौद्रे दृढा ज्ञेया प्राजापत्ये सुखावहा ।
स्वर्गलोकप्रदा स्वर्गे चक्रे चक्रप्रवर्त्तिनी ॥
वानस्पत्ये तु वरदा चान्त्ये गान्धर्व्वविवर्द्धिनी ।
वायवे भवति वस्त्राढ्या काले मृत्युप्रदायिनी ॥
आग्नेये दाहमाप्नोति क्लीवमब्दैवते तथा ।
सौरे भवति सुस्फीता चान्द्रे च वरदा तथा ॥
नश्यते चान्द्रदैवत्ये गोदेवे वृद्धिमाप्नुयात् ।
चैत्रे च पुष्टिदा प्रोक्ता तथा भवति पूजिता ॥
कौमारे वृद्धिमाप्नोति पित्र्ये नाशं तथैव च ।
वारुणे रोगदा प्रोक्ता शुभा चानन्तदैवते ॥
चपला वनदेवत्ये याम्ये मृत्युप्रदा भवेत् ।
वाग्देवत्ये सदा वाग्मी श्रीगे च श्रीयुतो भवेत् ॥
धनगे धनसंयुक्तः सुदृढः प्रेतदैवते ॥
पृथ्वीदेवे दृढा सौम्या शुभा स्याद्वेददैवते ।
पौरुषे च तथा रोषे बहुधर्मविवर्द्धिनी ।
कर्त्तुः सुखावहा चैव तथा लाभयुता भवेत् ॥

इति सामान्यप्रतिष्ठा ।

---

## अथ शिवप्रतिष्ठा ।

अथ ज्योतिःसमुच्चये ।

उत्तरायणगते भानौ लिङ्गस्थापनमुत्तमं ।
दक्षिणे त्वयने पूर्व्वं चिवर्णादि भयावहं ॥
अयने स्थापनं नेष्टं तथा वै दक्षिणायने ।
अयने स्थापिते लिङ्गे व्याधिना पीड्यते प्रजा ॥
कुमाराः क्षयपीड्यन्ते कन्यानाशश्च जायते ।
कुलनाशस्तथोपश्च तदा राज्ञां प्रजायते ॥
कर्त्तुः क्षयः सदा शोको गृहे भवति दारुणः ।
तस्मान्न स्थापयेद्देवं अयने दक्षिणायने ॥
स्थापनन्तु प्रकर्त्तव्यं शिशिरादावृतुत्रये ।
प्रावृषि स्थापितं लिङ्गं भवेद्वरदयोगदं ॥
हेमन्ते ज्ञानदं लिङ्गं शिशिरे सर्व्वभूतिदं ।
लक्ष्मीप्रदं वसन्ते च ग्रीष्मे च जय-शान्तिदं ।
यतीनां सर्व्वकाले च लिङ्गस्थारोपणं मतं ॥

रत्नावल्यां ।

माघ-फाल्गुन-वैशाख-ज्येष्ठाषाढेषु पञ्चसु ।
मासेषु शुक्लपक्षेषु सदुष्टपक्षवर्जिते ॥
द्वितीया पञ्चमी षष्ठी सप्तमी नवमी तथा ।
द्वादश्येकादशी ग्राह्या पूर्णिमा च त्रयोदशी ॥
गुरुः शुक्रो बुधः सोमो वरयेत्तु सुखावहं ।

आर्द्रा शतभिषा स्वाती रोहिणी श्रवणं तथा ॥
पूर्वाषाढोत्तराषाढा ज्येष्ठाश्लेषा च रेवती ।
चित्रा-हस्तौ धनिष्ठा स्यादनुराधा च सिद्धिदा ॥

लक्षणसमुच्चये ।

नक्षत्रे यत्र तत्रापि सर्वकालं द्विपक्षयोः ।
लिङ्गस्य स्थापनं शस्तं यतेः कामार्थिनो ध्रुवं ॥

रत्नावल्यां ।

सौभाग्यः शोभनायुष्मान् सिद्धः साध्यः शिवः शुभः ।
वृद्धिः प्रीतिर्धृतिः सिद्धिः ध्रुवः शुक्लः सुशोभनम् ॥
ववश्च बालवश्चैव कौलवन्तैतिलं शुभम् ।
एवं परममैत्रश्च सम्पत्क्षेमं यथा शुभम् ॥
लग्नश्च वृश्चिकः सिंहो मेषोमिथुन-कर्कटौ ।
तथा कन्या तुला-कुम्भौ वृषभश्च प्रशस्यते ॥
रविहस्ते भवेत्सिद्धिः सोमे मृगशिरस्तथा ।
कृत्तिका भौमवारे स्यादनुराधा बुधे यदा ॥
रेवती भृगुसम्पन्ना शुक्रवारे पुनर्वसुः । ·
श्रवणं शनिवारे च सिद्धियोगाः शुभा मताः ॥
जन्मभप्रश्नतयोऽथ षट्सप्तैकादशाः शुभाः ।
भौम-मन्दौ तृतस्थौ च दि-सप्ताङ्क-शरैर्गुरुः ॥
जन्म-तुर्य-रसाष्टस्थो दशमस्य शुभो बुधः ।
रस-सप्त-दशान्त्यस्थः शुक्रस्त्वथ प्रयत्नतः ॥
चेत्रमध्ये शशाः सर्वे यमकण्टकेति निश्चिताः ।

यस्मात्ते सर्वकार्य्येषु तस्मात्तेष्वभियोजयेत् ॥
क्षीणचन्द्रस्तथा मन्दः(१) कुजार्कौ तैर्युतो बुधः ।
पापाः पापाश्रया यस्मात्तस्मात्तांश्च विवर्जयेत् ॥
केन्द्रस्थे च गुरौ शुक्रे न लग्नेन्दोर्यदा ग्रहाः ।
नष्टचन्द्रे तथा शुक्रे गुरावस्तं गते सति ।
प्रतिष्ठादिशुभारम्भान् दूरयात्रां विवर्जयेत् ॥
अन्यद्बहुतरं यच्च ज्योतिःशास्त्रविशारदः ।
समालोक्य नियुञ्जीत सर्वसाध्यान्यथाचरेत् ॥
कालचक्रसमुच्चये ।
शुद्धिने शुक्लपक्षे च रविवारर्चभूषिते ।
शुभग्रहतारकायोगे शुभलग्ने करणान्विते ॥
शैवे शैवे प्रतिष्ठा स्यान्मिश्रे च सितपक्षके ।
अद्वैते चैव कृष्णेऽपि मन्त्र-मूर्त्तिप्रभेदतः ॥
शैवा विद्धान्विता रौद्री शतं वर्षाणि तिष्ठति ।
पञ्चरात्री हरेर्मिश्रा पञ्चशोवर्षसंस्थितिः ॥
अद्वैता भैरवी या तु वाम-दक्षिणमन्त्रजा ।
शताद्धार्द्धन्तु या तिष्ठेत् बाणलिङ्गस्वयम्भुवा ॥
इति शिवप्रतिष्ठा ।

---

(१) निन्द्य इति क० ।

## अथ विष्णुप्रतिष्ठा ।

वैखानससंहितायां ।

अयने चोत्तरे कुर्यादृषिभे वा नराश्रितम् ।

देवीपुराणे वैखानससंहितायां ।

मार्गशीर्षक-माघौ द्वौ निन्दितौ ब्रह्मणा पुरा ।

मासेषु फाल्गुनः श्रेष्ठः चैत्रो वैशाख एव च ।

तेषेऽप्यसमयुग्माख्ये श्रावणे माघि वा भवेत् ॥

तत्त्वसारसंहितायां ।

प्रतिष्ठापर्विभिः प्रोक्ता या क्रमादुच्यतेऽद्य वा ।

प्रतिपच्च द्वितीया च नवमी च त्रयोदशी ।

दशमी द्वादशी पूर्णा शुक्लपक्षे शुभान्विता ॥

महापद्मपुराणे ।

पौर्णमास्यां त्रयोदश्यां द्वादश्यां शुक्लपक्षतः ।

प्रतिपद्द्वितीययोर्वा पञ्चम्यां दशम्यामपि ।

संहितासिद्धयश्चैता चक्षयोगं प्रकुर्व ते ॥

वैखानससंहितायां :

श्रवणे चैव रोहिण्यां स्वात्यां हस्ते पुनर्वसौ ।

त्रिषूत्तरेषु रेवत्यां श्रविष्ठे वारुणे तथा ॥

सौम्य-स्वात्यानुराधासु तिष्ये चैव विशेषतः ।

अन्यस्मिन् शुभऋक्षे वा शुभयोगगुणसंयुते ॥

अश्विनी-रोहिणीयोगे पुनर्वसौ च पुष्यतः ।

भरण्यां श्रवणे हस्ते रेवत्यामुत्तरासु च ।
त्रिषु नक्षत्रयोगेषु क्रमेणैषूत्तरायणे ॥

सागरसंहितायां ।

सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ।
एते सौम्या ग्रहाः प्रोक्ताः प्रतिष्ठा-योगकर्मणि ॥

'ग्रहाः' वाराः । 'सौम्याः' अनुकूलाः ।

महापञ्चरात्रे ।

सौम्यपक्षे प्रशस्तदिने सोम-भार्गववासरे ।
ग्रहयोग एवं भवेत्प्रतिष्ठा-यज्ञकर्मणि ॥

वैखानससंहितायां नृसिंहपुराणे ।

पूर्वपक्षे शुभे काले स्थिरे सोर्ध्वमुखेऽपि भे ।
अनुकूले च लग्ने च हरिः स्थाप्योऽमरैस्तथा ॥
नक्षत्रे च तिथौ युग्मे प्रशस्ते विष्टिवर्जिते ।
गुरु-शुक्र-बुधेन्दूनां एकवारयुते शुभे ॥
ग्रामस्य यजमानस्याप्यनुकूलेऽपि तत्र वै ।
चरराशिं विवर्ज्याथ स्थिरराशिं प्रगृह्य च ।
सुप्रशस्ते मुहूर्त्ते वै प्रतिष्ठां कारयेद्धरेः ॥

ज्योतिषसमुच्चये ।

सुदिने सितपक्षे च सुरवारसंभूषिते ।
सुचन्द्रतारकायोगे सुलग्ने करणान्विते ॥
द्वैते द्वैते प्रतिष्ठा स्यात्त्रिस्रे च सितपक्षके ।
अद्वैते चैव कृष्णे च मन्त्र-मूर्त्तिप्रभेदतः ॥

द्वैता सिद्धाग्निकी रौद्री शतवर्षाणि तिष्ठति ।
पञ्चराची हरेर्मिश्रा पञ्चशोवर्षसंस्थितिः ।
अद्वैता भैरवी सा तु वाम-दक्षिणमग्नला ॥

मधूककाष्ठप्रतिमाप्रतिष्ठाकालं वाराहपुराणे ।

शुक्लपक्षे तु द्वादश्यां नक्षत्रे रैवते तथा ।
तत्र संस्थापनं कुर्य्याद्भूमिसिद्ध्यर्थसाधनं ॥

इति विष्णुप्रतिष्ठाकालनिर्णयः ।

---

## अथ देवीप्रतिष्ठाकालः ।

देवीपुराणे ।

गुरौ मेषगते शुक्रे देवीस्थाय प्रतिष्ठपेत् ।
इहैव स भवेद्धन्यो मृतोगच्छेत्परम्पदम् ॥
तस्मान्मेषगते शुक्रे उत्तमा नवमी स्मृता ।
तथा माघाश्विनौ मासावुत्तमौ परिकीर्त्तितौ ॥
देवौ तत्र यदा शक्र-पांशुनापि प्रतिष्ठिता ।
भवते फलदा पुंसां कर्कस्थे च वृषस्थिते ॥
तथाच सिद्ध-गन्धर्वा नृपा वा राज्यकाङ्क्षिणः ।
ते यजन्तु यदा देवीं स्थापयित्वा विधानतः ॥
न तिथिर्न च नक्षत्रं नोपवासोऽत्र कारणम् ।
मातृ-भैरव-वाराह-नरसिंह-त्रिविक्रमाः ।

अश्विनासुरसम्भव स्नात्वा वै दक्षिणायने ॥

तथाच चतुःषष्टिप्रतिष्ठायाम् ।

ब्रह्मोवाच ।

स्थापनञ्च प्रवक्ष्यामि सर्वकामप्रसाधकम् ।
सर्वकालं प्रकर्त्तव्यं कृष्णपक्षे विशेषतः ॥
रात्रिरूपा यतो देवी दिवारूपो महेश्वरः ।
अतः सकालपूजाभिः सिद्धिदा परमेश्वरी ॥

इति देवीप्रतिष्ठाकालनिर्णयः ।

---

## अथ वापी-कूपादिप्रतिष्ठाकालः ।

वह्निपुराणे ।

वापी-कूप-तडागानां तस्मिन् काले विधिः स्मृतः ।
सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ॥
कर्कटे पुत्रलाभस्तु सौख्यं तु मकरे भवेत् ।
मीने यशोऽर्थलाभस्तु कुम्भे च सुवर्णकम् ॥
वृषे च मिथुने दृष्टिर्वृश्चिके शयनं भवेत् ।
पितृलोकस्तु कन्यायां तुलायां शाश्वती गतिः ।
सिंहे मेषे धनुर्नाशं मन्त्रीच दिन गच्छति ॥

भविष्योत्तरपुराणे ।

तस्मिन् यस्मिन्नपूर्वे कार्त्तिके च विशेषतः ।
तडागस्य विधिः कार्य्यः स्थिरलग्नप्रयोगतः ॥
मुनयः केचिदिच्छन्ति अतीते चोत्तरायणे ।
न कालनियमस्तत्र सलिलं तत्र कारणम् ॥

इति वाप्यादिप्रतिष्ठाकालनिर्णयः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये प्रतिष्ठाकालनिर्णयो नाम पञ्चदशोऽध्यायः ।

---

## अथ षोडशोऽध्यायः।

### अथ दीक्षाकालः।

तत्र नानादेवतादीक्षाकालः कालोत्तरे ।

शरद्वसन्तयोर्योगो दीक्षाकर्मविधौ वरः ।
तयोरसम्भवे वर्षा नान्यत्रापि प्रशस्यते ॥
दीक्षायामभिषेके च तथा मन्त्रपरिग्रहे ।
व्रतग्रहणमोक्षे च द्रव्यारम्भनकर्मणि ।
कार्त्तिक्याश्चैव वैशाख्यां स्वर्भानोरविदर्शने ॥

तत्रैव ।

चन्द्र-सूर्योपरागेषु षड्शीतिमुखेषु च ।
ग्रह-नक्षत्रयोगेषु विषुवत्सुदिनेषु च ।
अयनेषु च सर्वेषु योगः सर्वार्थसिद्धिदः ॥

कारणे ।

पूर्वाषाढे च माघे च आषाढे मृगशीर्षके ।
दीक्षां न कारयेद्धीमान् अन्यमासेषु कारयेत् ।
शुक्लपक्षे शुभर्क्षे च सुवार-तिथिभिर्युते ॥

क्रियाकाण्डशेखरे ।

न विना पर्व दीक्षा स्याद्दर्शात्तु मधु-पौषयोः ।
अन्यत्र तु सदा कार्य्या विशुद्धौ गुरु-शिष्ययोः ॥

वर्षादौ तु निषिद्धानि प्रशस्तान्युपलक्षयेत् ॥

वर्षादिषु निषिद्धेष्वपि कालेषु कदाचिच्छुभशकुनाद्युपलम्भे सति दीक्षा कर्त्तव्येत्यर्थः ।

प्रसिद्धास्तिथयोराशुदर्शनं गुरुपर्व च ।

पवित्रका तिथिश्चापि दीक्षाकर्मविधौ वरा ॥

रत्नावल्याम् ।

चतुर्थीं नवमीं षष्ठीमष्टमीञ्च(१) चतुर्दशीम् ।

पूर्णमासीं विना शेषाः सिता मुक्तौ मुमुक्षुषु ।

आदित्यं मङ्गलं शौरिं त्यक्त्वा वाराश्च भूतये ॥

सुप्रभेदे ।

सप्तम्याञ्च नवम्यां वा एकादश्यामथापि वा ।

दशम्याञ्च चयोदश्यां दीक्षाकर्म प्रशस्यते ॥

क्वचित्तु चयोदश्याममावास्यामिति पाठः ।

सितेन्दु-श-गुरूणान्तु परीक्षेत गुणागुणैः ।

गुणैर्युक्तांश्च संग्राह्य गुणहीनांश्च वर्जयेत् ॥

कालोत्तरे ।

चतुर्थ्यामथवाष्टम्यां चतुर्दश्यां तथैव च ।

पूर्णमास्यां प्रकर्त्तव्यं भूतिकामैः सिते सदा ॥

मुक्तिकामैः कृष्णपक्षे यत्किञ्चित्कर्म चाचरेत् ।

दिनच्छिद्राणि मुक्ताय चाद्यान्यास्तिथयः स्मृताः ॥

तन्त्रसागरसंहितायाम् ।

---

(१) षष्ठीं पञ्चमीञ्चेति क० ।

तां तां तिथिं पुरालोच्य तदुक्तां तत्र दीक्षयेत्।

इन्द्र उवाच।

कस्य का तिथिरुद्दिष्टा विशेषं वद नारद।
सङ्क्षेपेणैव दीक्षायां विशेषावसरं तथा॥

नारद उवाच।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः।
चतुर्दशी शिवस्योक्ता वाचः प्रोक्ता त्रयोदशी॥
द्वितीया तु श्रियः प्रोक्ता पार्वत्याश्च तृतीयका।
नित्यमार्गेषु पार्वत्या अष्टमी च चतुर्दशी॥
अष्टमी गणनाथस्य भानोः प्रोक्ता तु सप्तमी।
एवमुक्तास्तु संक्षेपात्तिथयः परिभाषिताः।
प्रपञ्चेन तिथीः सर्व्वाः सविचारोपणे स्मृताः।

कारणे।

पौष्णं रोहिण्यथादित्यं श्रवणञ्चाश्विनी तथा।
सावित्रं त्वाष्ट्र-वायव्ये नैर्ऋतं मैत्रमेव च॥
तिष्यं चिरुत्तरार्द्रा तु श्रविष्ठा च चित्रभम्।
नक्षत्राणि प्रशस्तानि दीक्षाकर्म्मणि सुव्रत॥

रत्नावल्याम्।

श्रीण्युत्तराणि रोहिण्यः पुष्यकं मृगशीर्षकम्।
हस्तः स्वातिरनुराधा मघा मूलञ्च रेवती॥
अभिजिच्छ्रवणश्चेति शिवयोगे चतुर्दशी।
योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः स्मृतः॥

सुकर्मा च धृतिर्वृद्धिर्ध्रुवः सिद्धिश्च हर्षणः।
वरीयांश्च शिवः सिद्धो ब्रह्मा ऐन्द्रश्च योगकाः॥
लिङ्गानि तानि सर्वाणि प्रशस्तानि विमुक्तये।
किन्तु देशिकलेखादौ शुभान्यन्यानि पूर्ववत्॥
प्रतिपत्पूर्वाषाढा च पञ्चमी कृत्तिका तथा।
पूर्वाभाद्रपदा ज्येष्ठा दशमी रोहिणी तथा॥
द्वादश्या सर्पनक्षत्रमर्य्यम्णा च त्रयोदशी।
नक्षत्रयुग्मा इत्येते देवानामपि नाशदाः॥

कारणे।

राशयश्च चराः श्रेष्ठा मध्यमाश्चोभये स्मृताः।
स्थिरश्च मैथुनस्थाने ग्रहाः सर्वे विवर्जिताः।
आचार्य्य-शिष्ययोरानुकूल्यं शुभप्रदं भवेत्॥

क्रियाकाण्डशेखरे।

राश्यादिवर्गसंशुद्धिर्लग्नचन्द्रार्कयोरपि।
बलं गोचरशुद्धिश्च योगशास्त्रे प्रतीयताम्॥
लग्नदोष-ग्रहदोषाः सर्वे नश्यन्ति ते शुभे।
लग्नस्थे भार्गवे प्रौढे केन्द्रस्थे च वृहस्पतौ॥
इत्यादिनिपुणं वीक्ष्य दीक्षां मौसुलवीम्प्रति।
मौसुलवीं प्रति न यत्कालादिनियमः स्मृतः॥
मन्त्रवर्णेषु सिद्धान्वे सुसिद्धान्मेलयेद्बुधः।
वैवर्णवानुदासीनान् गणयेद्वसुभिः पृथक्॥
सिद्धराशौ हरेद्भागं वसुभिर्भानुभिः स्वरैः।

मृत्युराशिस्तु यः प्रोक्तो वामे सप्तोदिता हि या ॥
रिपुराशिगतः प्रोक्तो मासोऽसौ परिकीर्त्तितः ।
हरेत्पञ्चदशं भागं तिथिज्ञानाय मन्त्रगम् ॥
मासि तस्मिंस्तथा यामे कुर्वीत ग्रहणं मनोः ।
ज्योतिःशास्त्रात्सुनिर्णीते लग्ने वा दीक्षितो भवेत् ॥

अथ दीक्षार्थं प्रशस्तास्तिथीः प्रतिपाद्य तत्त्वसागरसंहितायाम् उक्तं हि ।

तिथिं विनापि दीक्षाया विशिष्टावसरं शृणु ।
दुर्लभे सद्गुरूणान्तु सहसैव उपस्थिते ।
तदनुज्ञा यदा लब्धा स दीक्षावसरोभवेत् ॥
ग्रामे वा यदि वारण्ये क्षेत्रे वा दिवसे निशि ।
आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत् ॥
प्राप्ता दीक्षा तदा ज्ञेया गुरौ च समुपस्थिते ।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ॥

इति नानादेवदीक्षाकालः ।

---

## अथ विष्णुदीक्षाकालः ।

क्रतुपञ्चरात्रे ।

विज्ञाय नीतिप्रवणं हि शिष्य-
मुदग्गतौ तीक्ष्णकरस्य काले ।

सोमस्य हस्तौ श्रुभलग्नयुक्ते
सर्व्वोत्सवेदं क्रपया गुरुस्तु ॥

महापञ्चरात्रे ।

द्वादश्यां शुक्लपक्षस्य सूर्य्यसंक्रमणे तथा ।
द्वादश्यां कृष्णपक्षस्य पौर्णमास्यां मुनेऽथवा ॥
अमावास्यायामथवा कालशुद्धिस्तु देशिकः ।
तदेकदिवसः पूर्वमधिवासनमारभेत् ॥

तत्त्वसागरसंहितायाम् ।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः ।
चतुर्दशी शिवे प्रोक्ता वायः प्रोक्ता चतुर्दशी ॥

सौरपञ्चरात्रे नवकदीक्षाविषये ।

दीक्षाविधौ वा नवके च काले
स्याद्वादशी पञ्चदशी तिथिस्तु ।
एकादशी पञ्चदशी तिथिर्व्वा
भवेच्चतुर्द्दश्यथवाष्टमी च ।
याचादिके योगविधौ प्रशस्ता
स्याद्देवतानां नवमी चतुर्थी ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परि-शेषखण्डे कालनिर्णये दीक्षाकालो नाम षोडशोऽध्यायः ।

---

## अथ सप्तदशोऽध्यायः ।



### अथ नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

विष्णुधर्म्मोत्तरे ।

कालश्च द्विविधो ज्ञेयः स्थूल-सूक्ष्मोपलक्षितः ।
स्थूलश्च लौकिको ज्ञेयः सूक्ष्मश्चाध्यात्मिकस्तथा ॥
सर्वं स्थूले च कर्त्तव्यं सूक्ष्मं कालविधिं शृणु ।
स्वस्थानकाक्षिनिमिषतुर्य्यभागस्त्रुटिः स्मृतः ॥
तद्द्वयन्तु लवः प्रोक्तो निमेषस्तद्द्वयं भवेत् ।
निमेषाः पञ्चदश काष्ठाः त्रिंशत्काष्ठाः कला स्मृता ॥
त्रिंशत्कला मुहूर्त्तश्च तदेव घटिकाद्वयम् ।
सार्द्धाश्च नाडिकाः सप्त यामस्तस्मिन्निरुच्यते ।
सन्ध्योऽष्टौ समाख्याता अहोरात्रं विचक्षणैः ॥
यजनं प्रतिमानन्तु उत्तमन्त्वतिकीर्त्तितम् ।
उदये चैव मध्याह्ने प्रदोषे चार्द्धयामके ॥
यजनं मध्यमं मध्य उदयेऽस्तमनं समं ।
परार्द्धेषु कालेषु पूजयेत्तु विशेषतः ॥
द्विकालं वा त्रिकालं वा आत्मार्थं संप्रपूजयेत् ।
पूजारम्भाय यजन्तं सर्वं सन्ध्याविधिं कुरु ॥
सन्ध्यादिक्रमचाद्दोषाः कृते चेत्तु न दोषकः ।

पूर्वाह्णे चैव मध्याह्णे प्रदोषे बलिमाचरेत् ॥
अन्यासु सर्वसन्ध्यासु नाचरेत्तु बलिक्रमम् ।
अर्द्धयामे बलिं कुर्य्यात् काम्यार्थी तु विशेषतः ॥
नित्योत्सवे च पूजायां तथा संवत्सरोत्सवे ।
कारयेत्तु विशेषेण अन्यथा नैव कारयेत् ॥
भास्करोदयमारभ्य यावत्तु दश नाडिकाः ।
प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ॥
पूर्वाह्णाच्च समारभ्य यावत्तु दश नाडिकाः ।
मध्याह्न इति विज्ञेयः स्थापनारोपणादिषु ॥
मध्याह्नात्तु समारभ्य यावत्तु दश नाडिकाः ।
सायङ्काल इति प्रोक्तः प्रदोषमधुना शृणु ॥
अस्तमानं समारभ्य सार्द्धाः सप्त च नाडिकाः ।
प्रदोष इति विख्यातस्त्वर्द्धयाममतः शृणु ॥
प्रदोषान्तं समारभ्य त्रिपादेन त्रिनाडिकाः ।
अर्द्धयाम इति प्रोक्तस्त्वर्द्धरात्रमथोच्यते ॥
अर्द्धयामान्तमारभ्य यावत्तु दश नाडिकाः ।
अर्द्धरात्रमिति प्रोक्तं रात्रिनर्क्तमथोच्यते ॥
भास्करस्योदयात्पूर्वं त्रिपादेन त्रिनाडिकाः ।
रात्रिनक्तमिति प्रोक्तं ज्ञात्वैवं सर्वमाचरेत् ॥
जलसंग्रहणं पुष्पसंग्रहं चन्दनं तथा ।
उदयादेव कर्त्तव्यं रात्र्यन्ते वा जलग्रहः ।
देवतास्थापनं तीर्थं प्रातःकाले समाचरेत् ॥

प्रातःकालात्समारभ्य यावद्वै दश नाडिकाः ।
तावद्वापि प्रकर्त्तव्यं तीर्थकार्यं प्रजापते ॥
अङ्कुरार्पणकार्यं तु जलवस्त्राधिवासनं ॥
यावच्च प्रारभेद्धोमान् रक्षार्थेव प्रबन्धने ॥
स्नापने मोचने चैव गर्भन्यासे तथैव च ।
अधिवासनानि सर्वाणि मध्यरात्रे तु कारयेत् ॥
रात्र्यन्तके विशेषेण सर्वदेवक्रियार्थकं ।
कुर्यात्परं महार्घ्यं तदाशुभनिवृत्तये ॥

इति नित्य-नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

---

## अथ विष्णुपूजाकालः ।

तत्र विष्णुधर्मोत्तरे ।

एककालं द्विकालं वा त्रिकालं पूजयेद्धरिं ।
अपूज्य भोजनं कुर्वन् नरकाणि व्रजेन्नरः ॥

नारदीये ।

प्रातर्मध्यन्दिने सायं विष्णुपूजां समारभेत् ।
यथा सन्ध्या तथा नित्या देवपूजा स्मृता बुधैः ॥
अशक्तो विस्तरेणैव प्रातः सम्पूज्य केशवं ।
मध्याह्ने चैव सायञ्च पुष्पाञ्जलिमपि क्षिपेत् ॥
मध्याह्ने वा विस्तरेण सङ्क्षेपेणाथवा हरिं ।
सम्पूज्य भोजनं कुर्यादन्यथा नरकं व्रजेत् ॥

निमित्तेषु च सर्वेषु तत्काले च विशेषतः ।
पूजयेद्देवदेवेशं द्रव्यं सम्याप्य यत्नतः ॥

इति विष्णुपूजाकालः ।

---

## अथ देवताविशेषपूजने तिथिविशेषाः ।

भविष्यत्पुराणे द्वादशीकल्पे ।

प्रतिपत्पावकी प्रोक्ता द्वितीया ब्रह्मणस्तु ।
तृतीया गिरिपुत्र्यास्तु चतुर्थी विघ्नहारिणः ॥
पञ्चमी नागराजानां षष्ठी स्कान्दी तिथिः स्मृता ।
सप्तमी सप्तसप्तेश्च अष्टमूर्त्तेस्तथाष्टमी ॥
नवमी योगिनीनान्तु यमस्य दशमी तथा ।
एकादशी धनेशस्य द्वादशी चक्रिणस्तथा ॥
त्रयोदशी अनङ्गस्य भूतेशस्य चतुर्दशी ।
पौर्णमासी प्रजेशस्य पितॄणां दर्श उच्यते ॥

इति देवताविशेषपूजने तिथिविशेषाः ।

---

## अथ कामनाविशेषात्तिथ्यादिविशेषे देवताविशेषपूजा ।

भविष्यत्पुराणे ।

अग्निमिष्ट्वा च जुत्वा च प्रतिपद्यहुतं हुतम् ।
हविषा सर्वधान्यानि प्राप्नुयादमितं धनम् ॥
ब्रह्माणञ्च द्वितीयायां संपूज्य ब्रह्मचारिणः ।

भोजयित्वा च विद्यानां सर्वासां पारगो भवेत् ॥
तृतीयायां च विघ्नेशं विघ्नेशो जायते ध्रुवम् ।
क्रयादिव्यवहारेषु लाभो बहुगुणो भवेत् ॥
गणेशः पूजितः कुर्य्यात् चतुर्थ्यां सर्वकर्मसु ।
अविघ्नं विदुषां विप्र कार्य्यनाशश्च कर्हिचित् ॥
नागानिष्ट्वा च पञ्चम्यां न विषैरभिभूयते ।
स्त्रियं वा लभते पुत्रान् परांश्च श्रियमाप्नुयात् ॥
सम्पूज्य कार्त्तिकेयन्तु द्विजः षष्ठ्यां प्रजायते ।
मायावी रूपसम्पन्नो दीर्घायुः कीर्त्तिवर्द्धनः ॥
सप्तम्यां पूजयेत् देवं चित्रभानुं दिवाकरम् ।
अष्टम्यां पूजितो देवो गोचूडाभरणो हरः ।
ज्ञानं ददाति विपुलं कामजान् यच्छते गुणान् ॥
मृत्युहा धनदश्चैव पापहा च प्रपूजितः ।
दुर्गां संपूज्य दुर्गाणां नवम्यां तरणेच्छया ।
संग्रामे व्यवहारे च सदा विजयमादिशेत् ॥
दशम्यां धर्मराजस्तु सर्व्वव्याधिहरो ध्रुवम् ।
नरकादपमृत्योश्च समुद्धरति मानवम् ॥
एकादश्यां यथोद्दिष्टा विश्वेदेवाः प्रपूजिताः ।
प्रजां पुष्टिञ्च धान्यञ्च प्रयच्छन्ति महीं तथा ॥
द्वादश्यां पूजितो देवः सर्व्वैश्वर्य्यसमन्वितः ।
बहुपुत्रो बहुधनस्तथा लाभाय संश्रयः ॥
त्रयोदश्याञ्च सम्पूज्य कामदेवं महाबलम् ।

पूजितः परया भक्त्या धनं पुत्रांश्च दापयेत् ॥
चतुर्दश्यां महादेव उमाकान्तो जगद्गुरुः ।
सम्पूजितो महाभक्त्या सर्वान् कामान् ददात्यसौ ॥
पौर्णमास्याञ्च यः सोमं पूजयेत् भक्तिमान् नरः ।
बह्वपत्यं भवेत् तस्य इति मे निश्चिता मतिः ॥
अमायां पितरः पिण्डैरिष्टाः कुर्वन्ति सर्वदा ।
पूजां वृद्धिं धनं रक्षामायुष्यं बलमेव च ॥
उपवासं विनाप्येते भवन्त्यनुग्रहप्रदाः ।
पूजिता जपहोमैश्च तोषिता भक्तितः सदा ॥
मूलमन्त्रास्तु चैषाभिरुक्तमन्त्राश्च कीर्त्तिताः ।
पूर्वञ्च पञ्चपञ्चाः कर्त्तव्याश्च तिथीश्वराः ॥
एतेषाञ्च रूपाणि देवताकाण्डे भाषोक्तानि ।
गन्ध-पुष्पोपहारैश्च यथाशक्ति विधीयते ।
पूजा श्राद्धे न कर्त्तव्या क्वापि न फलप्रदा ॥
आज्यधारासमिद्भिश्च दधि-क्षीरान्न-माक्षिकैः ।
यथोक्तफलदो होमो जपः शान्तेन चेतसा ॥
कृत्वा यज्ञं इमान्दे च(१) फलान्येतानि भक्तितः ।
यथोक्तानि यथोक्तानि लभेतैवाधिकानि तु ॥
इह जन्मन्यथान्यस्मिन् निवसेच्च सुखी सदा ।
तेषां लोकेषु मन्त्रज्ञो यावतीष(२) तिथिः स्मृता ॥
इह तस्मात् परिभ्रष्टश्चाज्ञो जायते नरः ।

(१) इष्ट-वे चेति ख० ।  (२) यावचेहेति ख० ।

सुरूपो धनसम्पन्नो निर्जितारिर्महीपतिः ।
स्त्रीपुत्रपुत्रको वापि जायते पुरुषोत्तमः ॥

कूर्म्मपुराणे ।

देवताभ्यर्च्चनं नृणामशेषाघौघनाशनम् ।
अमावास्यां तिथिं प्राप्य यश्चाराधयते भवम् ।
ब्रह्माणं पूजयित्वा तु सर्व्वपापैः प्रमुच्यते ॥
कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्द्दशीम् ।
सम्पूज्य ब्राह्मणमुखे सर्व्वपापैः प्रमुच्यते ॥
त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् ।
दृष्ट्वेशं प्रथमे यामे सर्व्वपापैः प्रमुच्यते ॥
अमावास्यामथावाप्य उद्दिश्य च पितामहम् ।
ब्राह्मणांस्त्रीन् समभ्यर्च्य मुच्यते सर्व्वपातकैः ॥
षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः ।
सप्तम्यामर्च्चयेद्भानुं मुच्यते सर्व्वपातकैः ॥
भरण्याञ्च चतुर्थ्याञ्च शनैश्चरदिने यमम् ।
पूजयेत् सप्तजन्मस्थैर्मुच्यते पातकैर्नरः ॥
एकादश्यां निराहारः समभ्यर्च्य जनार्द्दनम् ।
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ॥

विष्णुधर्म्मोत्तरे ।

मार्कण्डेय उवाच ।

कालं तवाहं वक्ष्यामि देवतापूजने पृथक् ।
संवत्सरेण सर्व्वस्य सोपवासस्य सर्व्वदा ॥

ब्रह्मार्थं पूजयेत् देवं सततं प्रथमेऽहनि।
पक्षद्वये महाभाग पञ्चदश्यामुपोषितः॥
संवत्सरेण धर्मज्ञ विद्यावत्तमुवर्णकम्।
हंसयुक्तेन यानेन ब्रह्मलोकं प्रपद्यते॥
चैत्रमासस्य या शुक्ला प्रथमा प्रतिपद् भवेत्।
तदह्नि ब्रह्मणः कृत्वा सोपवासस्तु पूजनम्।
संवत्सरमवाप्नोति सौख्यानि भृगुनन्दन॥
कालस्यावयवाः सर्वे तस्मिन्नहनि पूजिताः।
यच्छन्ति च धर्मज्ञ सौख्यं दद्युरनुत्तमम्॥
संवत्सराधिपं नागं तस्मिन्नहनि पूजयेत्।
प्रहाच्च सौख्यमाप्नोति स्वास्थ्यमत्यन्तमेव च॥
तथाग्निं ब्रह्मणा सृष्टं त्रैलोक्ये प्रथमं द्विज।
हृष्टं प्रजापतिं नित्यं द्वितीयायामथार्चयेत्।
फलमाप्नोति धर्मज्ञ गोमेधस्य न संशयः॥
तथा नासत्ययोः कृत्वा तस्मिन्नहनि पूजनम्।
नित्यमारोग्यमाप्नोति तथा रूपस्य भार्गव॥
शुक्लपक्षे द्वितीयायां बालचन्द्रस्य पूजनम्।
कृत्वा दृष्ट्वा च लवणं प्राप्नोति सुभगो भवेत्॥
यात्रा द्वादश ये प्रोक्तास्तेषां कृत्वा तु पूजनम्।
तृतीयायां महाभाग द्वादशाहफलं भवेत्॥
तृतीयायां तदाभ्यर्च्य ब्रह्म-विष्णु-महेश्वरान्।
पृथक् पृथक् महाभाग त्रिवर्गफलभाग् भवेत्॥

पौषे शोकाख्य तदा नाम सम्यक् संपूज्य यत्नतः ।
ऐश्वर्यं महदाप्नोति गतिमव्याञ्च विन्दति ॥
तृतीया माधवे कृष्णा या स्यात् श्रवणसंयुता ।
तस्यां संपूज्य गोविन्दं पुष्टिमग्र्यामवाप्नुयात् ॥
वैशाखे शुक्लपक्षे तु तृतीयायामुपोषितः ।
अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य च ॥
या तस्मात् कृत्तिकोपेता विशेषेण सुपूजिता ।
तत्र दत्तं हुतं जप्तं सर्वमक्षयमुच्यते ॥
अक्षया सा तिथिस्तस्मात् तस्यां सुकृतमक्षयम् ।
अक्षतैः पूजितो विष्णुस्तेन साप्यक्षया मता ॥
अक्षतैस्तु नरः स्नातो विष्णोर्दत्त्वा तथाक्षतान् ।
यवान् सुसंस्कृतांश्चैव हुत्वा चैव तथाक्षतान् ॥
विप्रेषु दत्त्वा तानेव तथा सक्तून् सुसंस्कृतान् ।
यवान्नं सुमहाभाग फलमक्षयमश्नुते ॥
एकामप्युक्तवत् कृत्वा द्वितीयां भृगुनन्दन ।
एतामब्दतृतीयानां सर्वासान्तु फलं लभेत् ॥
प्रोक्तास्तु भृगवो नाम देवा द्वादश ये पुरा ।
चतुर्थ्यां पूजनं तेषां कृत्वा दिवमवाप्नुयात् ॥
यमराजपूजनं कृत्वा चतुर्थ्यामेव धार्मिकः ।
नाप्नोति नारकं दुःखं तुष्टे रविसुते नरः ॥
विनायकमथाभ्यर्च्य चतुर्थ्यां यदुनन्दन ।
सर्वविघ्नविनिर्मुक्तः कार्यसिद्धिमवाप्नुयात् ॥

श्रियं रतिं तथा लक्ष्मीं कीर्त्तिं मेधां सरस्वतीम् ।
प्रज्ञां पुष्टिं तथा कान्तिं तथैवाहनि पूजयेत् ॥
तत्प्रसादादवाप्नोति यथेष्टं मनुजोत्तम ।
विद्याकामो विशेषेण पूजयेच्च सरस्वतीम् ॥
देवानां मातरः सर्व्वास्तथ तथाह्नि पूजिताः ।
सर्व्वकामप्रदा ज्ञेयाः पुरुषस्य विपश्चितः ॥
पञ्चम्यां पूजनं कृत्वा तथा च मनसा नरः ।
सौभाग्यं महदाप्नोति धनधान्यञ्च विन्दति ॥
पञ्चम्यां पृथिवीं देवीं तथा संपूजयन्नरः ।
तामवाप्नोति यत्नेन नात्र कार्य्या विचारणा ॥
विश्वेदेवास्तु ये प्रोक्ताः पूर्व्वमेव मया द्विज ।
तेषां संपूजनं कृत्वा पञ्चम्यां दिवमाप्नुयात् ॥
दृष्टं गन्धर्व्वमभ्यर्च्य पञ्चम्यां सुभगो भवेत् ।
तथा चित्ररथं तेषां राजानन्तु विशेषतः ॥
देवभार्य्यास्तथा सर्व्वाः संपूज्य सुभगो भवेत् ।
दृष्ट्वा नन्दरथञ्चैव तथा रूपमवाप्नुयात् ॥
दृष्टं नागं तथाभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ।
वासुके पुष्करस्थायी पञ्चम्यां सुखमारभेत् ॥
सर्व्वकामसमृद्धस्य यक्षस्य सुफलं भवेत् ।
तथा च पूजयेद्राजन् तथैव नलकूवरम् ॥
श्रियः संपूजनं कृत्वा पञ्चम्यां प्रयतः सदा ।
श्रियमाप्नोति विपुलां संवत्सरमपोदिताम् ॥

सर्वेषां नृप पञ्चम्यां रतिं प्रीतिं सरस्वतीम्।
उमां मेधां भद्रकालीं तथा कात्यायनीमपि॥
धृतिं खाहां स्वधाव्वृद्धिं अनसूयां तथा चमाम्।
सुरभिं देवसेनाञ्च मेधां ज्योत्स्नां तथा प्रभीम्॥
गौरीं वरुणपत्नीञ्च यमपत्नीं तथैव च।
धूम्राख्यां सुभगाभागां मृत्युच्छायां तथैव च॥
अभीष्टदेवजननीं देवपत्नीं तथैव च।
पूजयेत् काममाप्नोति तस्मान्नेकामसंशयम्॥
ऐरावतञ्च गरुडमुच्चैःश्रवसमेव च।
हरस्य वृषभञ्चैव शस्त्राण्यस्त्राणि यानि च।
तथा संपूजयेद्राजन् विजयं समुपाश्रुते॥
तथा भाद्रपदे मासि शुक्लपक्षस्य पञ्चमी।
नागसम्पूजनं कृत्वा धनभागी भवेन्नरः॥
कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा।
चतुरात्मविनिर्द्दिष्टो भगवान् क्रौञ्चसूदनः॥
तमभ्यर्च्य नरः षष्ठ्यां पुत्रानाप्नोत्यभीप्सितान्।
बालानां पूजनात् श्रेयो नरः प्राप्नोत्यसंशयम्॥
मातॄणां पूजनं तत्र कृत्वा तु सुखमाप्नुयात्।
स्कन्दपार्श्वचरान् राजन् रुद्रपार्श्वचरानपि।
यमपार्श्वचरांश्चैव रोगमुक्तिमवाप्नुयात्॥
कश्यपाग्नींस्तथाभ्यर्च्य सूर्य्यपत्नीं सुवर्च्चसम्।
इष्टान् कामानवाप्नोति नात्र कार्य्या विचारणा॥

एवमेकोनपञ्चाशत् मरुतो नाम कीर्तिताः ।
तेषां सम्पूजनं कृत्वा सप्तम्यां दिवमाप्नुयात् ॥
इन्द्रस्य पूजां प्रेतस्य तदा कृत्वा सुखी भवेत् ।
पूजयित्वा तथाभीष्टां सरितं पुण्यभाग् भवेत् ॥
वह्निसम्पूजनं कृत्वा वह्निष्टोममवाप्नुयात् ।
वायोः सम्पूजनं कृत्वा प्राप्नोति परमां गतिम् ॥
सम्पूज्य च ऋषीन् सप्त सोमपास्तु ये स्मृताः ।
सदा प्राप्नोति तानेव गतिमग्र्यां च विन्दति ॥
सप्तम्यां चतुराद्यं च इष्टमभ्यर्च्य मुनिम् ।
स्वाध्यायफलमाप्नोति तदापि फलमश्नुते ॥
पूजयित्वा समुद्रांश्च द्वीपमध्ये तदा नरः ।
पातालस्थान् महाभाग भुवमाप्नोत्यभीप्सिताम् ॥
सप्तलोकांस्तथा तत्र पूजयित्वा सुखी भवेत् ।
द्वीपांश्चैव तथैवाग्र्यां गतिमप्रतिमां लभेत् ॥
गङ्गां सप्तप्रकारांश्च तथा देवीं सरस्वतीम् ।
सप्त यज्ञानवाप्नोति नरः सम्पूज्य वै ध्रुवम् ॥
आदित्यं पूजयित्वा वै क्षिप्रं रोगैः प्रमुच्यते ।
सप्तम्यां पादपमेव गतिमग्र्यां च विन्दति ॥
एकानंशां तदा देवीं तथा सम्पूजयन्नरः ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥
नरेन्द्रपूजनं कृत्वा गतिमग्र्यां तथा लभेत् ।
अनन्तं प्रकृतस्थं पूजयित्वा सुखी भवेत् ॥

अष्टम्यां पूजनं कृत्वा वसूनां धर्मवित्तमः[१]।
नाकलोकमवाप्नोति वञ्छिच[२] मनसेप्सितम् ॥
चतुष्पथेषु रथ्यासु तथैवोद्यानेषु च ॥
गिरिशृङ्गेषु रथ्यासु नदीतीरेषु चाप्यथ।
गुहासु च नवां रथ्यां[३] पिशाचानां बलिं हरेत् ॥
ब्रह्मादीनाञ्च देवानां कृत्वा सम्पूजनं ततः।
तेषां बलिं विनिक्षिप्य क्षेममाप्नोति मानवः ॥
आयुधं पूजयित्वा तु तदा विजयमाप्नुयात्।
दशम्यां पूजयित्वा वै वैश्वदेवांस्तथा दश।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सम्पूजयेद्राजन् तथैव च दिशो दश।
क्रियासु फलमाप्नोति यच यथाभिजायते ॥
धर्मं सम्पूज्य देवेशं सर्वसत्त्वसुखावहम्।
धर्म्मां गतिमवाप्नोति धर्म्मस्य फलमेव च ॥
एकादशान्तु संपूज्य रुद्रानेकादश प्रभो।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सर्वगतान् रुद्रान् मुदा[४] सर्वत्र पूजयेत्।
सर्व्वान् कामानवाप्नोति सर्व्वगानपराजितान् ॥
तथा च द्वादशादित्यान् द्वादश्यां पूजयेन्नरः।

---

(१) धर्म्मवित्तमत इति ख०। (२) वञ्छिं चेप्सनसि स्थितमिति क्वचित्पाठः
(३) रथ्यां मार्ग्येत्यर्थः। (४) सदेति ग०।

द्वादश्यां यज्ञमवाप्नोति गतिमग्र्याञ्च विन्दति ॥
द्वादश्यां देवदेवेशं पूजयित्वा प्रजाधिपम् ।
पुण्डरीकमवाप्नोति यत्र यं याद्यां पतिम् ॥
सर्व्वदेवेश्वरं शक्रं पूजयित्वा तथा नरः ।
सर्व्वान् कामानवाप्नोति स्वर्गलोकञ्च गच्छति ॥
विष्णोः संपूजनं कृत्वा कामानाप्नोत्यभीप्सितान् ।
इष्टमग्र्यं फलं प्राप्य गतिमग्र्याञ्च विन्दति ॥
त्रयोदश्यामथाभ्यर्च्च कामदेवं जगत्पतिम् ।
सौभाग्यं महदाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रशुक्लत्रयोदश्यां कामदेवमथार्च्चयेत् ।
अर्च्चनात् सर्व्वमाप्नोति फलं संवत्सरोदितम् ॥
यक्षाणां राक्षसानाञ्च चतुर्द्दश्यान्तु पूजनम् ।
कृत्वा क्षेममवाप्नोति क्रियायाफलमेव च ॥
पूजयित्वा धनाध्यक्षं तदा वैश्रवणं प्रभुम् ।
बहुवित्तमवाप्नोति फलं संवत्सरोदितम् ॥
शङ्ख-पद्मौ तथाभ्यर्च्च निधाने यत्नपूजिते ।
मणिभद्रं तथाभ्यर्च्च धनं प्राप्नोत्यसंशयम् ॥
पूजयित्वा महादेवं सर्व्वान् कामानवाप्नुयात् ।
माघमासे चतुर्द्दश्यां कृष्णपक्षे विशेषतः ॥
तथा पितृगणान् राजन् पौर्णमास्यां तु पूजयेत् ।
सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
श्राद्धं कृत्वा तथा राजन् सर्व्वान् कामानवाप्नुयात् ।

सर्वमिन्दुं तथाभ्यर्च्य सौभाग्यं महदाप्नुयात् ॥
रुद्रं षष्ठमथाभ्यर्च्य सप्तममथवा नृप ।
तस्मात् क्षेममवाप्नोति कामञ्च यदुनन्दन ॥
मासनाम: च सप्तं करणं सोममेव च ।
पूजयित्वा तथा राजन् सौभाग्यं महदाप्नुयात् ॥
सोपवासस्तु सप्तं सप्तेशमथार्चयेत् ।
सप्तवामभागे च तस्मात् काममवाप्नुयात् ॥
कार्त्तिकेयं महाभागं कृत्तिकास्वर्चयेन्नरः ।
वह्निहोममवाप्नोति कुलस्यैव समुद्धरेत् ॥
कृत्तिकासु तथाभ्यर्च्य वज्रं विजयमाप्नुयात् ।
भोगिनं नागमभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ॥
कामदेवमथाभ्यर्च्य भार्य्यं सौभाग्यमाप्नुयात् ।
सावित्रे च तथा हस्ते ब्रह्मा सायुज्यमाप्नुयात् ॥
दृष्टपदार्चितं देवं तस्मानं यक्षमेव च ।
गन्धर्वं वा यक्षं वापि तस्मात् कामानवाप्नुयात् ॥
कृष्णपक्षे चतुर्दश्यां महाकालमथार्चयेत् ।
सर्वान् कामानवाप्नोति तथैश्वं नात्र संशयः ॥
महेश्वरं मातृगणं तथा वह्निं प्रपूजयेत् ।
एकां वा मातरं राजन् काममाप्नोत्यभीप्सितम् ॥
तथा तुम्बुरुगन्धर्वपञ्चकं पूजयेन्नरः ।
सर्वत्र जयमाप्नोति नात्र कार्य्या विचारणा ॥
कृत्तिकासु नरोऽभ्यर्च्य स्कन्दपार्श्वचरांस्तथा ।

आरोग्यं महदाप्नोति सदा वा मनसेप्सितम् ॥
नृसिंहप्रतिमाश्चैव पूर्णचन्द्रं समर्चयेत् ।
नरो ब्राह्मणान् राजन् सर्वकाममनोरमान् ॥
एकां वा मातरं राजन् कामानाप्नोत्यभीप्सितान् ।
यानसत्यमवाप्नोति पूजयित्वा वनस्पतीन् ॥
देवानां मानवानाञ्च तत्पथा ये तथापरे ।
तेषां सम्पूजनं कृत्वा चतुर्दश्यां सुखी भवेत् ॥
करणे वा मुहूर्त्ते वा यथावद् देवमर्चयेत् ।
तस्मात् काममवाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रमासमथारभ्य यथोक्तेऽह्नि नरः सदा ।
इष्टदेवमथाभ्यर्च्य यथोक्तं फलमश्नुते ॥
संवत्सरेण धर्मज्ञ नक्षत्रे यदि वा तिथौ ।
एतेषु सर्वधर्मज्ञ सोपवासः समाहितः ॥
संवत्सरे चायने च ऋतौ मासे च तद्दले ।
नक्षत्रे संयतः पूजां कृत्वा तत्स्वामिनः सदा ।
तावत्कालं महाभाग तस्मात् काममवाप्नुयात् ॥

चैत्रात् समारभ्य महानुभाव
रोचेत यस्मै सुरमर्चयानः ।
तस्यैव तोषात् परमं च कामम्
प्राप्नोति यस्मात् चतुर्वर्गमत्र ॥

इति कामनाविशेषेण तिथ्यादिविशेषे देवताविशेषपूजा ।

---

## अथ कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

देवीपुराणे ब्रह्मोवाच ।

देवता यस्य नक्षत्रे यदा तुष्टिचिता तदा ।
अर्चितो यश्च देवस्तु तदा स फलभाग् भवेत् ॥
देवताश्च प्रवक्ष्यामि नक्षत्राणां यथाक्रमम् ।
नक्षत्राणि च सर्वाणि यज्ञांश्चैव पृथक् पृथक् ॥
अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः ।
व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीडितः ॥
भरण्यां यममभ्यर्च्य कुसुमैरसितैः शुभैः ।
तथा गन्धादिभिः शुभ्रैरपमृत्योर्विमुच्यते ॥
अनलः कृत्तिकायान्तु ऋद्धिं सम्पूजितः पराम् ।
(१)रक्तमाल्यादिभिर्दद्यात् हुतहोमेन च ध्रुवम् ॥
इष्टः प्रजापतिः पूज्य इष्टान् दद्यात्पशूंस्तथा ।
रोहिण्यां देवमाहूय दद्याच्च हरिक्षुरान् ॥
मृगशीर्षे तथा सोमं अथमारोग्यमेव च ।
आर्द्रायान्तु शिवं पूज्य पशून् विजयमश्नुते ॥
सितैः पद्मादिभिर्द्रव्यैर्दैवतं पयसा च वै ।
पुनर्वसौ चाप्यदितिं यदा सम्पूजनादिभिः ॥
यष्टा तर्पिता चैव तानेव परिरक्षति ।

---

(१) रक्तेति ग० ।

तिष्ये बृहस्पतिर्वृद्धिं ददाति विपुलं धनम् ॥
पान-गन्धादिभिर्नागा अश्लेषायां प्रपूजिताः ।
तर्पितस्तु पितृगणो भक्ष्याद्यैर्मधुरैः शुभैः ॥
मघायां विजयं दद्यात् पूर्वायान्तु भगस्तथा ।
भर्त्तारमीप्सितं कुर्यात् कन्यायाः पुरुषस्य च ॥
इष्ट जन्मनि चाप्युत्तरायां तथार्य्यमा ।
पूजितः सविता हस्ते विश्वतेजोनिधिः सदा ॥
शस्तैः पुष्पादिभिः सर्व्वैर्ददाति विपुलन्धनम् ।
राज्यं त्वष्टा च चित्रायां निष्कण्टकं प्रयच्छति ॥
स्वात्यां सन्तर्पितो वायुर्दद्यादायुर्बलं परम् ।
इन्द्राग्नी च विशाखायां पीतरक्तैः प्रपूजयेत् ॥
धनं राज्यं बलं चेन्द्रोऽपि नियच्छेत् सदा ।
अनुराधां समासाद्य मित्रं सम्पूज्य भक्तितः ॥
प्रियो भवति सर्व्वेषां निर्म्मलं चित्तमाप्नुयात् ।
ज्येष्ठायां पूर्ववच्छक्रमिष्ट्वा पुष्टिमवाप्नुयात् ॥
गुणैः सर्व्वैश्च सम्पूज्य कर्म्मणा च धनेन च ।
मूले तु निर्ऋतं सम्यक् भक्त्या सम्पूज्य पूर्ववत् ॥

इति कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

---

## अथ निमित्तनक्षत्रादेः संयोगविशेषे देवता- विशेषपूजा ।

देवीपुराणे ब्रह्मोवाच ।

शृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
सर्वपक्षेषु महापुण्यं पर्व-तिथियोगिकम् ॥
शृणु कृष्णाष्टमीयोगं शिवयोगेषु चोत्तमम् ।
चतुर्वर्गस्य भाग्यस्य समया भृगुवासरे ॥
दैवयोगाद्यदा षष्ठी पुष्यर्क्षे रविवासरे ।
स्कन्दयागस्तदा कार्य्यः सर्वकामप्रसाधकः ॥
यदा तु सूर्य्यवारेण सप्तमी विजया तु सा ।
तदा सम्भवते भानोर्योगः सर्वगुणावहः ॥
अश्विरिक्षावमायोगे चार्द्रर्क्षे मातृपूजनम् ।
मायायाः कालिकायाश्च यष्टव्या विधिना मुने ।
सम्पूर्णं फलमाप्नोति चसाने खेचरो भवेत् ॥
पुष्यैरिष्ट्वा जलं शैलैः पूर्वाश्लेषे च पूर्ववत् ।
स पापात् मुच्यते क्षिप्रं शारीरात् मानसात्तथा ॥
आषाढ़ासु तथा विष्णुमुत्तराषाढ़योगतः ।
विष्णुं सम्पूज्य पुष्पाद्यैः स्वर्गमाप्नोति चात्मनः ॥
श्रवणे त्वर्चिते विष्णोः पुष्पैर्धूपैश्च भक्तितः ।
सन्ततं श्रियमाप्नोति धनं विजयमेव च ॥
धनिष्ठायां वसूनिष्ट्वा न भयं विद्यते क्वचित् ।
महान्तोऽपि तथा तेषां गन्ध-पुष्पादिभिः शुभैः ।

यद्यत्तु समभ्यर्च्य व्याधिभिर्मुच्यते ध्रुवम् ॥
आतुरः पुष्टिमाप्नोति स्वास्थ्यमैश्वर्य्यमेव च ।
अर्कं भाद्रपदायान्तु शुद्धस्फटिकसन्निभम् ।
सम्पूज्य मुक्तिमाप्नोति नात्र कार्य्या विचारणा ॥
उत्तरायामहिर्बुध्न्यं परां तुतिमवाप्नुयात् ।
रेवत्यां पूजितः पूषा ददाति सततं पशून् ॥
चितैः पुष्टिं क्षितिं चैव धृतिं विजयमेव च ।
अथ चैते समाख्याता यज्ञाः सङ्क्षेपतो मया ॥
नक्षत्रदेवतानाञ्च साधकानां हिताय वै ।
भक्त्या वित्तानुसारेण भवन्ति फलदा ध्रुवम् ॥
गन्तुं चेच्छेद् यदा ग्रामं यात्रायां ध्रुवमेव च ।
नक्षत्रदेवतायज्ञं कृत्वा तत्सर्वमाचरेत् ।
एवं कृते हि तत्सर्वं यात्राफलमवाप्नुयात् ॥
क्रियाफलञ्च सम्पूर्णमित्युक्तं भानुना स्वयम् ।
यज्ञाभावे जपङ्कुर्य्याद्धोमङ्कुर्य्याद्यथेप्सितम् ॥
इति तिथिनक्षत्रादिसंयोगविशेषे देवताविशेषपूजा ।

---

## अथ पवित्रारोपणकालः ।

तत्र शिवपवित्रारोपणकालः ।

शिवधर्म्म-भविष्यपुराणयोः ।

पौर्णमास्यां तथा षष्ठ्यां शिवं सम्पूज्य यत्नतः ।

उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् ॥
पुनरेवं च कार्त्तिक्यां पूजां सम्यक् समापयेत् ।
यतिभ्यो दक्षिणां दद्यात् सुवर्णादिपूर्विकाम् ॥
यः कुर्य्याच्छ्रद्धयैवं चातुर्मास्यं पवित्रकम् ।
कल्पकोटिशतं दिव्यं रुद्रलोके महीयते ॥
पुण्यक्षयात्परिभ्रष्टश्चतुर्वेदश्च जायते ।
इहागतो मर्त्त्ये राजा गुणरूपसमन्वितः ॥

शिवरहस्ये ।

पवित्रारोपणं शम्भोः कुर्य्यान्नभसि वा शुचौ ।
चतुर्द्दश्यामथाष्टम्यामधिवास्य विधानतः ॥
श्रावणे प्रौष्ठपद्यां वा पवित्रारोपणन्तु यः ।
कुरुते नापवित्रं[1] जायते संवत्सरान्तरा ।
शम्भोः पवित्रमारोप्य रिक्तः सम्पूर्णतामियात् ॥
पवित्रात्तु पवित्रन्तु यस्माद् भृगुनन्दन ।
अपवित्रं पवित्रं स्याद्देहकर्माश्रितं नृणाम् ॥

कालोत्तरे ।

पूजां कृत्वा प्रकर्त्तव्यं नित्यमेव पवित्रकम् ।
अथवा नियमेनैव कुर्य्यान्मासद्वयान्तरे ॥
आषाढान्ते चतुर्द्दश्यां नभस्य-नभसोस्तथा ।
अष्टम्याञ्च चतुर्द्दश्यां पक्षयोरुभयोः समम् ।
पवित्रारोपणं कार्य्यं न तु कालान्तरे स्थितम् ॥

---

(१) अपवित्रमिति भावप्रधानो निर्देशः अपवित्रत्वमित्यर्थः ।

एवं काले व्यतिक्रान्ते प्रायश्चित्तं समाचरेत् ।
भौतिकानां विशेषेण शुक्लपक्षे व्ययं विधिः ॥

'आषाढ़ान्ते चतुर्द्दशीमिति पौर्णमास्यां चान्द्रमासविवक्षया आषाढ़शुक्लचतुर्द्दशीमित्यर्थः ।

तथाच मोहचौरोत्तरे ।

आषाढ़स्य तथादिष्टा श्रावणस्य सिताचिता ।
श्रावण्यास्तु चथोदश्यां तत्र मन्त्रपवित्रकम् ॥
चथोदश्यां प्रकर्त्तव्यं पवित्रं मन्त्रसंज्ञितम् ।
पवित्रमथ भक्तानामाषाढ़ नियमः स्मृतः ॥

एवं यद्यपि विष्णुस्वापाभावे न कर्त्तव्यम्, किन्तु विष्णुस्वापानन्तरमेव कर्त्तव्यम् ।

उक्तञ्च ।

आषाढ़ेऽपि न कर्त्तव्यमसुप्ते मधुसूदने ।
कालोऽयमिति तस्यैव भूयतां विधिरिष्यते ॥
शुक्लाषाढ़चतुर्द्दश्यां कुर्य्याच्छ्रावण-भाद्रयोः ।
मासं चतुर्द्दश्यां पञ्चदोरथयोरपि ॥ .

नन्वाषाढ़चतुर्द्दशीमित्यनेनैव(१) विष्णुस्वापानन्तरकालः स्वयमेव लभ्यते, तत्र किमिति असुप्ते एव मधुसूदन इति । सत्यम् । किन्तु आषाढ़स्यायाद्विविधत्वाद्यः चौरक्षेति तत्र चान्द्रे कर्त्तव्यं यदिति पुनरधिकमासे चौरमासिककर्त्तव्यत्वात्मेव विष्णुः स्वपितीत्येतदुक्तमिति न दोषः ।

---

(१) न आषाढ़चतुर्द्दशीमित्यनेनैवेति ख० ।

तथाच ज्योतिःशास्त्रे ।

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ इति ।

तथा ।

दर्शद्वयमतिक्रम्य यदा सङ्क्रमते रविः ।
अधिमासः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥

इति वचनाच्च । पूर्वाषाढ़े पवित्रं न कुर्वीतेत्यभिप्रायः । यदा तु चैत्रादिषट्सु मासेष्वन्यतमस्मिन्नधिकमासे द्विराषाढ़ः स्यात्तदा श्रावणे विष्णुस्वापः ।

तथाच ज्योतिःशास्त्रे ।

माधवादिषु षट्सु एकमासे दर्शद्वयं तदा द्विराषाढ़स्तदापि स्वापैषे श्रावणे व्यूढ़ः, अतस्तदा श्रावणादौ पवित्रारोपणं परं कार्य्यम् ।

उक्तञ्च मोहचौरोत्तरे ।

दीक्षादिस्थापनाभ्यश्च पवित्रादि व्रतक्रतोः ।
पवित्रादि न कुर्वीत यदिच्छेच्छुभमात्मनः ॥
दर्शद्वयं भवेद्यत्र रविसङ्क्रान्तिवर्जितम् ।
अधिमासः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥
तुलामासेऽधिमासे च कर्त्तव्यन्तु पवित्रकम् ।
शुभे चैव क्षयीकेशे दोषभागन्यथा भवेत् ॥

ननु किं चान्द्रमासेन सौर एव ग्राह्यो भवेत् तथाधिकमासस्य प्रसक्तिः, नैवं । प्रायेण पवित्रारोपणे चान्द्र एव मासोऽभिमतो न तु सौरः, कन्यागते रवौ प्रायश्चित्ताभिधानात् ।

